श्रीगणेशाय नमः ।

श्रीमद्व्यासविरचितभारतान्तर्गतः

# इतिहाससमुच्चयः ।

पुराणग्रंथः ।

सोऽयं

श्रीकृष्णदासात्मज-गङ्गाविष्णोः

अध्यक्ष "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये

मैनेजर पं० शिवदुलारे वाजपेयीत्यनेन स्वाम्यर्थं

मुद्रयित्वा प्रकाशितः ।

शकाब्दाः १८३८, संवत् १९७३.

कल्याण-मुंबई.

# भूमिका।

मान्यवर! यद्यपि 'ज्ञानेनैव तु कैवल्यं' इति सिद्धांतोऽस्ति तथापि तद्बीजभूतस्य 'भारतं पंचमो वेद' इत्युक्तत्वात्तद्व्यासनिर्मितमहाभारतस्य समस्तस्मृत्यादिग्रंथेषु धर्मशास्त्रादिग्रंथेष्वपि न्यग्रोधमूलवत् संश्लेषोऽतीव परिदृश्यते। अत एव यन्महाभारते नास्ति तत्क्वापि न विद्यते। एवं निश्चितस्यापि तन्महाभातस्यातीव विस्तृतत्वात्तज्ज्ञानदौर्गम्यपरिहारायायं 'एकत्रिंशदध्यायात्मक इतिहाससमुचयः' इत्याभिधानकः सत्यप्रतिज्ञादयास्वधर्मदृढनिश्चयादिमोक्षसाधनभूतसद्धर्माणां सोदाहरणः श्रोत्रकर्णादींद्रियाणामतीव मनोहरः संजातः। विनास्वादं फलमाधुर्यं व्यर्थमिति न्यायेनास्वाद्योऽयं श्रीमद्विद्वद्वरैरिति। शम्।

श्रीकृष्णदासात्मजो गंगाविष्णुः
'लक्ष्मीवेंकटेश्वर' छापाखाना,
कल्याण–मुंबई.

# अथेतिहाससमुच्चयग्रंथाध्यायानुक्रमणिका.



इति विषयानुक्रमणिका समाप्ता ।

श्रीगणेशाय नमः ।



# अथेतिहाससमुच्चयः ।

## प्रथमोऽध्यायः १ ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥ नमोऽस्त्वनंताय सहस्रमूर्त्तये सहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ २ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविंदाय नमो नमः ॥ ३ ॥ रक्षंतु वः प्रबलदानवयुद्धखिन्नाः कालीयभोगिदमनाहतचित्रितांगाः ॥ चाणूरमुष्टिकहिरण्यकशानुलग्नाः प्रत्यग्रलग्नरचिता हरिबाहुपांथाः ॥ ४ ॥ पांतु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः ॥ त्रैलोक्यमंडपस्तंभाश्चत्वारो हरिबाहवः ॥ ५ ॥ जितमजितेन भगवता जलधिशयेन जलदवर्णेन ॥ वसुधोद्धरणरसातलपंकांकितगंडतुंडेन ॥ ६ ॥ स जयति वरः कवीनां त्रिकालवेत्ता त्रितयलोकस्य ॥ अनिशं कर्णरसायनकथासुधापायको व्यासः ॥ ७ ॥ पुनरपि तेनैव जितं हिरण्यकशिपोरुरस्थलं येन ॥ कुलिशादपि कठिनतरं किसलयमिव कररुहैश्छिन्नम् ॥ ८ ॥ जयति पराशरसूनुः सत्यवतीहृदयनंदनो व्यासः ॥ यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥ ९ ॥ पाराशर्य्यवचःसरोजममलं गीतार्थगंधोत्कटं नानाख्यानककेसरं हरिकथासंबोधनाबोधितम् ॥ लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा भूयाद्भारतपंकजं कलिमलप्रध्वंसिनः श्रेयसे ॥१०॥ द्वैपायनोष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथ पापहरं शिवं च ॥ यो भारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभिषेचनेन ॥ ११ ॥ कृष्णं द्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ॥ को त्वन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥ १२ ॥ मतिमंथानमाविश्य येन वेदमहार्णवात् ॥ जगद्धिताय जनितो महाभारतचंद्रमाः॥१३॥ प्रायशो

मुनयः सर्वे केवलात्महितोद्यताः ॥ द्वैपायनस्तु भगवान् सर्वभूतहिते रतः ॥१४॥ स्तुत्यं कस्यापि किं चान्यद्येन लोकहितैषिणा ॥ वेदो व्यस्तः कृतं शास्त्रं महाभारतमद्भुतम् ॥१५॥ सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥ इत्युक्त्वा सर्ववेदार्थां भारते येन दर्शिताः ॥१६॥ समस्तानपि तानर्थानेकस्थान् दर्शयिष्यतः ॥ श्रूयतां सिंहनादोऽयमृषेस्तस्य महात्मनः ॥ १७ ॥ धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ॥ यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ १८ ॥ एष प्रकृत्यैव यतो लोकः सक्तोऽर्थकामयोः ॥ धर्ममोक्षपरस्तस्मात्करिष्येऽहं समुच्चयम् ॥ १९ ॥ कामिनो वर्णयन्कामं लोभक्षुग्धस्य वर्णयन् ॥ नरः किं फलमाप्नोति कूपेंऽधमिव पातयन् ॥ २० ॥ मुनिनापि च कामार्थौ ज्ञात्वा लोकमनोहरौ ॥ निंद्यावपि स्तुतावेतौ धर्ममोक्षविवक्षया ॥२१॥ अन्यथा घोरसंसारे बन्धहेतू जनस्य तौ ॥ वर्णयेत्स कथं धीमान्महाकारुणिको मुनिः ॥ २२ ॥ लोकचिंतानुरागार्थं वर्णयित्वा च तेन तौ ॥ इतिहासैर्विचित्रार्थैः पुनस्तत्रैव निंदितौ ॥ २३ ॥ भारतं भानुमानिंदुर्यदि न स्यात्त्रयीमयम् ॥ ततो ज्ञानतमोऽधस्य कावस्था जगतो भवेत् ॥ २४ ॥ भारताध्ययनात्पुण्यादपि पादमधीयतः ॥ श्रद्दधानाच्च कंपंते सर्वपापान्यशेषतः ॥ २५ ॥ एतज्ज्ञात्वा तु विद्वद्भिर्नित्यं हाससमन्वितैः ॥ अध्येयो भारतीयोऽयमितिहाससमुच्चयः ॥ २६ ॥ श्लोका ये भारते श्रेष्ठाः क्वचित्केचिद्व्यवस्थिताः ॥ तुल्यार्थविहितान् सर्वान् योजयिष्यामि तानहम् ॥ २७ ॥ सारश्लोकान्समाहर्तुं कः कृष्णाद्भारतात्क्षमः ॥ कः शक्तः सर्वरत्नानि समुद्धर्तुं महार्णवात् ॥ २८ ॥ न च प्रज्ञाभिमानेन मया कर्तुं समुद्यते ॥ किंतु भारतभक्तिर्मां विवशं समनूनुदत् ॥ २९ ॥ तन्महाभारतप्रीतिपराधीनांतरात्मनः ॥ क्षंतव्यः सज्जनैरेष मम योऽयं क्रियादरः ॥३०॥ द्वात्रिंशदितिहासानामितिहाससमुच्चयः ॥ क्रियते घोरसंसारनिर्मोकस्यै-

कसाधनम् ॥ ३१ ॥ पूर्वं श्येनजिदाख्यानं गौतम्यास्तदनंतरम् ॥ तृतीयं मुद्गलाख्यानमौशीनरमतः परम् ॥ ३२ ॥ ततश्च गंगामाहात्म्यं सक्तुप्रस्थीयमेव च ॥ सुदर्शनस्य चाख्यानं सप्तमं परिचक्षते ॥ ३३ ॥ ततश्च नरकाख्यानं कपोताख्यानमेव च ॥ दुर्गातितरणं नाम दशमं परिचक्षते ॥ सप्तर्षीणां च संवाद एकादशमितिस्मृतम् ॥ ३४ ॥ लोभाख्यानं ततः प्रोक्तं जाजल्याख्यानमेव च ॥ अंडधारस्य चाख्यानं चतुर्दशमसुच्यते ॥ ३५ ॥ मंकीगीतमथाख्यानं बोध्यगीतमतः परम् ॥ इंद्रकश्यपसंवादः सप्तदश उदीरितः ॥ ३६ ॥ पितुः पुत्रस्य संवादः शुकशासनमेव च ॥ विंशकं भूमिदानं च गोदानं च ततः परम्॥३७॥ अन्नदानं महापुण्यं द्वाविंशकमथोच्यते ॥ तिलदानं ततो विद्यान्नृगाख्यानं ततः परम् ॥ ३८ ॥ च्यवनस्य च संवादः पंचविंशक उच्यते ॥ मानसी तीर्थयात्रा च ब्रह्महत्याविधिस्तथा ॥ ३९ ॥ अष्टाविंशकमाख्यानं बहुलाख्यानमेव च ॥ सुव्रतायाश्च संवाद एकत्रिंशकमुच्यते ॥ ४० ॥ पुंडरीकस्य संवादो नारदेन महर्षिणा ॥ द्वात्रिंशकमिति प्राहुरितिहासं पुरातनम् ॥ ४१ ॥ अत्रैवानुक्रमो ज्ञेयो न मया भारते बुधैः ॥ एवं द्वात्रिंशदाख्यानामितिहाससमुच्चयः ॥ ४२ ॥ जनमेजय उवाच ॥ जलप्रदानं सुहृदां कृत्वा ते पांडुनंदनाः ॥ नारायणस्तु विप्रर्षे किं चकार ततः परम् ॥ ४३ ॥ वैशंपायन उवाच ॥ कृतोदकं तु राजानं धर्मपुत्रं युधिष्ठिरम् ॥ पुण्ये भागीरथीतीर उपविष्टं सहानुजम् ॥ ४४ ॥ निःश्वसंतं महाभागमधोवदनमातुरम् ॥ अभिजग्मुर्महात्मानं पुण्या ब्रह्मर्षयस्तथा ॥ ४५ ॥ नारदो देवलो व्यासः कचः कण्वोऽथ कश्यपः ॥ रैभ्यो बृहस्पतिर्धौम्यश्च्यवनो गालवो भृगुः ॥ ४६ ॥ वसिष्ठो जमदग्निश्च दुर्वासा रोमशस्तथा ॥ अन्ये च बहवः सिद्धाः सशिष्याः संशितव्रताः ॥ ४७ ॥ तान्प्रणम्य यथान्यायं सर्वैस्तैश्चाभिनंदितः ॥ प्रोवाचेदं ततो

राजा बाष्पव्याकुललोचनः ॥ ४८ ॥ युधिष्ठिर उवाच ॥ घातयित्वा प्रियान्बंधून्पुत्रान् भ्रातॄन्पितॄंस्तथा ॥ जयोऽयमजयाकारो मुनयः प्रतिभाति मे ॥ ४९ ॥ अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च ॥ तथान्येषु नरेंद्रेषु सुहृत्संबंधिबंधुषु ॥५०॥ न विमुंचति मां शोको ज्ञातिघातिनमातुरम् ॥ राज्यकामुकमत्युग्रं स्ववंशच्छेदकारकम् ॥५१॥ यस्यांके क्रीडिता बाल्ये नित्यं च परिवर्द्धिताः ॥ स मया राज्यलुब्धेन गांगेयो युधि घातितः ॥ ५२ ॥ येन संवर्द्धिता बाल्ये येन स्म परिरक्षिताः ॥ अल्पकालस्य राज्यस्य कृतेऽसौ घातितो मया ॥ ५३ ॥ तन्मे दहति गात्राणि यन्मां गुरुरभाषत ॥ सत्यं कथय राजेंद्र यदि जीवति मे सुतः ॥ ५४ ॥ स मया राज्यलुब्धेन पापेन गुरुघातिना ॥ सत्यकंचुकमुत्सृज्य व्याजेन ध्वंसितो गुरुः ॥ ५५ ॥ अश्वत्थामा हतः सत्यं इत्युक्तं कुंजरे हते ॥ कांस्तु लोकान् गमिष्यामि कृत्वैतत्कर्म दारुणम् ॥ ५६ ॥ अघातयं यथा कर्णं सर्वशस्त्रभृतां वरम् ॥ ज्येष्ठभ्रातरमत्युग्रं को मत्तः पापकृत्तमः ॥ ५७ ॥ अभिमन्युं तथा बालं जातं सिंहमिवाद्रिषु ॥ प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालिताम् ॥ ५८ ॥ तदाप्रभृति बीभत्सुं न शक्नोम्यभिवीक्षितुम् ॥ कृष्णं तु पुंडरीकाक्षं किल्बिषी भ्रूणहा यथा ॥ ५९ ॥ द्रौपदी च प्रियैः पुत्रैः पंचभिर्विप्रयोजिताम् ॥ दुःखाद्दुःखमनुप्राप्तं दृष्ट्वा मे दह्यते मनः ॥ ६० ॥ सोऽहमंतकरः प्रायः पृथ्व्वै नाशकारकः ॥ शोषयिष्ये प्रियान्प्राणानिहस्थो मुनिसत्तमाः ॥ ६१ ॥ सर्वे मामनुजानीध्वं त्यक्ष्यामीदं कलेवरम् ॥ ज्ञातिष्वन्येष्वपि यथा न भविष्यति कुलांतकृत् ॥ ६२ ॥ वैशंपायन उवाच ॥ तमेवंवादिनं दीनं बहुशोकेन विह्वलम् ॥ परावरज्ञो भूतानां व्यासो वचनमब्रवीत् ॥ ६३ ॥ श्रीवेदव्यास उवाच ॥ मा कृथा पुरुषव्याघ्र त्वं शोकं गात्रशोषणम् ॥ न हि ते सुलभा राजन् हता येऽस्मिन् रणाजिरे ॥ ६४ ॥ व्यसनेषु न शोचंति

हृष्यंत्युदयेषु च ॥ ज्ञानवंतो महात्मानस्त्वद्विधाः पांडुनंदन ॥ ६५ ॥ ग्रस्यंते यदि शोकेन त्वादृशोऽपि विपश्चितः ॥ ततस्तेषां विपश्चित्वे श्रम एव हि केवलम् ॥ ६६ ॥ शोकस्थानसहस्राणि भयस्थानशतानि च ॥ दिवसे दिवसे मूढमाविशंति न पंडितम् ॥ ६७ ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ तस्मादपरिहार्य्येऽर्थे नानुशोचितुमर्हसि ॥ ६८ ॥ अवश्यं भाविनो येऽर्थाः स्वकर्मफलहेतवः ॥ न तान्संतोऽनुशोचंति शास्त्रतत्वार्थवेदिनः ॥ ६९ ॥ मृतं वा यदि वातीतं यो नष्टमनुशोचति ॥ दुःखेन दुःखमाप्नोति ह्यनर्थं प्रतिपद्यते ॥ ७० ॥ पृथिवी वायुराकाशमापो ज्योतिश्च पंचमम् ॥ एतदादीनि भूतानि तत्र का परिदेवना ॥ ७१ ॥ न स कश्चिदुपायोऽस्ति देवो वा मानुषोऽपि वा ॥ येन मृत्युवशः प्राप्तो जंतुः पुनरिहाव्रजेत् ॥७२॥ बांधवैः पुत्रदारैश्च वियुक्तस्य धनेन वा ॥ मग्नस्य व्यसने घोरे धृतिः पार्थ परायणम् ॥ ७३॥ श्रुतं धर्मं बलं वीर्यं सुखमुत्साहमेव च ॥ सर्वमेतत्कुरुश्रेष्ठ शोको हरति देहिनाम् ॥ ७४ ॥ यदानुशोचतां शोको व्यसनं नापकर्षति ॥ सामर्थ्यं शोचतो नास्ति तस्माच्छोकमिमं त्यज ॥ ७५ ॥ बालांश्च यौवनस्थांश्च वृद्धान्गर्भगतानपि ॥ सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥७६॥ एवंविधेषु भूतेषु सर्वावस्थाविनाशिषु ॥ को नु हृष्यति जातेषु शोकं कुर्यान्मृतेषु च ॥७७॥ नातीतमनुशोचंति नेर्ष्यां कुर्वंति च स्पृहाम् ॥ वर्तमानेन सज्जंते लोकतत्वविदो बुधाः ॥७८॥ क्व शोकः क्व महीपाल लोकपालवपुर्द्धरः ॥ त्यज शोकमिमं तस्मान्महामोहसमुद्भवम् ॥ ७९ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ यथा श्वेनजितं कश्चिज्ज्ञानवान् ब्राह्मणोऽब्रवीत् ॥८०॥ पुत्रशोकाभिसंतप्तं राजानं दीनमानसम् ॥ विषण्णवदनं दृष्ट्वा विप्रः प्रोवाच धर्मवित् ॥८१॥ ब्राह्मण उवाच ॥ किं तु मुह्यसि मूढ त्वमशोच्यं किन्नु शोचसि ॥ शोचसि त्वं यदि तदा शोचिष्यंत्यपरे जनाः ॥ ८२ ॥ त्वं

चैवाहं च ये चान्ये त्वां राजन्पर्युपासते ॥ सर्वे एव मरिष्यामो ब्रूहि का परिदेवना ॥ ८३ ॥ अदर्शनादिहायातः पुनश्चादर्शनं गतः ॥ नासौ तव न तस्य त्वं वृथा किमनुशोचसि ॥८४॥ नायमत्यंतसंवासः कस्यचित्केनचित्सह ॥ अपि स्वेन शरीरेण किमुतान्यैः पृथग्जनैः ॥ ८५ ॥ जनेनासि जनाज्जातो जनस्ते जनितो जनात् ॥ जनं शोचसि कस्मात्त्वं नात्मानं शोच्यभाजनम् ॥ ८६ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ८७ ॥ क नु चाद्या पिता राजन् क नु तेऽद्यपितामहः ॥ त्वं न पश्यसि तानद्य न त्वां पश्यंति तेऽपि च ॥ ८८ ॥ एवं पुत्राश्च पौत्राश्च ज्ञातिसंबंधिबांधवाः ॥ तेषु स्नेहो न कर्तव्यो विप्रयोगश्च तैर्ध्रुवम् ॥ ८९ ॥ संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवम् ॥ बुद्बुदा इव तोयेषु भवंति न भवंति च ॥९०॥ यस्य योगो बहुमतो वियोगः कथमप्रियः ॥ यतो योगो वियोगेन ग्रस्त एवोपजायते ॥ ९१ ॥ क्षयांता निचयाः सर्वे पतनांताः समुच्छ्रयाः ॥ संयोगा विप्रयोगांता मरणांतं हि जीवितम् ॥ ९२ ॥ अनित्यं जीवितं रूपं यौवनं धनसंचयः ॥ आरोग्यं प्रियसंवासो मुह्यन्त्येषु न पंडिताः ॥ ९३ ॥ पंडिते चैव मूर्खे च बलवत्यथ दुर्बले ॥ ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ ९४ ॥ तुल्यकालप्रसूतस्य सहस्रस्यापि पार्थिव ॥ नराः शतायुषः पंच भवंति न भवंति च ॥ ९५ ॥ कुरंगमातंगपतंगभृंगमीना हताः पंचभिरेव पंच ॥ एकः प्रमादी स कथं न हन्यते यः सेवते पंचभिरेव पंच ॥ ९६ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ॥ लुब्धकधीवरपिशुना निष्कारणं वैरिणो जगति ॥ ९७ ॥ सर्वशास्त्रप्रमाथिनी सर्वपापविनाशिनी ॥ अप्रमत्तः प्रमत्तानां नृणां जागर्त्यनित्यता ॥ ९८ ॥ तस्माद्धि सर्वमेवेदमानित्यं यो न पश्यति ॥ सोऽनित्यताक्रांतमतिः ज्ञानवान्नानुशोचति ॥ ९९ ॥ स्वर्गान्तानि च सौख्यानि विषयांश्च मनोरमान् ॥

छिनत्त्येकपदे मृत्युर्वैराणीव मनस्विनः ॥ १०० ॥ अहोरात्रिमये लोके जरारूपेण संचरन् ॥ मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥ १०१ ॥ यथा हि पथिकः कश्चिच्छायामाश्रित्य विश्रमेत् ॥ विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ १०२ ॥ यथा काष्ठं च काष्ठेन समेयातां महोदधौ ॥ समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ १०३ ॥ समागमाः सापगमाः सर्वमुत्पादि भंगुरम् ॥ कायः सन्निहितापायः सर्वमुत्पादि भंगुरम् ॥ १०४ ॥ संपदो हि मनुष्याणां गंधर्वनगरोपमाः ॥ दृश्यमाना क्षणेनैव भवंति न भवंति च ॥ १०५ ॥ मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ॥ दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ १०६ ॥ भैषज्यमेतद्दुःखस्य यदेतन्नानुचिंत्यते ॥ चिंत्यमानं हि नापैति भूयश्चापि विवर्द्धते ॥ १०७ ॥ अतीतं नानुशोचंति न कुर्वंति मनोरथम् ॥ नोच्छिद्यन्ते न शुष्यंति ह्यगाधाः पंडिता ह्रदाः ॥ १०८ ॥ अज्ञानप्रभवः शोकः शरीरस्यापि शोषणः ॥ तस्मात्त्वं पुरुषव्याघ्र त्यजैनं राजसत्तम ॥ १०९ ॥ व्यास उवाच ॥ इत्येवं श्येनजिद्राजा द्विजेन प्रतिबोधितः ॥ पुत्रशोकं परित्यज्य स्वस्थचित्तोऽभवत्तदा ॥ ११० ॥ तस्मात्त्वमपि राजेंद्र प्रज्ञामास्थाय सात्त्विकीम् ॥ ज्ञातिशोकं परित्यज्य भुंक्ष्व राज्यमकंटकम् ॥ १११ ॥ वैशंपायन उवाच ॥ एवं बहुविधैः प्रोक्तः कृष्णद्वैपायनेन सः ॥ दुःखशोकपरीतात्मा प्रत्युवाच युधिष्ठिरः ॥ ११२ ॥ युधिष्ठिर उवाच ॥ नचाहं श्रद्दधे ब्रह्मन्सर्वज्ञस्य वचस्तव ॥ किंतु ज्ञातिवधोद्भूतः शोको मां बाधते बलात् ॥ ११३ ॥ प्रियाः पुत्राश्च पौत्राश्च पितरोऽथ पितामहाः ॥ स्वस्रीया भ्रातरश्चैव ज्ञातयो बांधवास्तथा ॥ ११४ ॥ अन्ये च पृथिवीपाला नानादेशसमुद्भवाः ॥ घातिता राज्यलोभेन मयोग्रेण पितामह ॥ ११५ ॥ तांस्तादृशान्रणे हत्वा धर्मनिष्ठान्महीक्षितः ॥ यज्वनः कुरुमुख्यांश्च कां गमिष्याम्यहं गतिम् ॥ ११६ ॥ दह्योऽ-

इमनिशं तात चिंतयानः पुनः पुनः ॥ हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ ११७ ॥ का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति ॥ या हीनाः पतिभिः पुत्रैः पितृभिर्भ्रातृभिस्तथा ॥ ११८ ॥ कुररीणामिवार्त्तानां क्रंदंतीनामहर्निशम् ॥ निशम्य निःस्वनं तासां को नु जीवितुमुत्सहे ॥ ११९ ॥ स इमं क्रूरकर्माणं ज्ञातिघातिनमातुरम् ॥ त्रैलोक्यराज्यलोभेन न मामद्य प्रहर्षयेत् ॥ १२० ॥ वैशम्पायन उवाच ॥ तमेवं दुःखशोकार्तं विलपंतं महीपतिम् ॥ कृपया परयाविष्टो व्यासः पुनरभाषत ॥ १२१ ॥ व्यास उवाच ॥ अतीतेषु महाराज न शोकं कर्त्तुमर्हसि ॥ पुनरुक्तं च वक्ष्यामि दैवदृष्टमिदं प्रभो ॥ १२२ ॥ स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने ॥ एवं ते पार्थिवा राजन् हता येऽस्मिन्रणाजिरे ॥ १२३ ॥ न पृथिव्या सकलया न सुवर्णस्य राशिभिः ॥ न गवाश्वेन सर्वेण लभ्यास्ते नृपसत्तमाः ॥ १२४ ॥ न तेषां चापि हंता त्वं न भीमो नार्जुनस्तथा ॥ स्वकर्मविधियुक्तेन नृपाः कालेन ते हताः ॥ १२५ ॥ हेतुमात्रं भवंतोऽपि तस्य कालस्य पार्थिव ॥ शुध्यंति भूतैर्भूतानि रूपमस्य तथैश्वरम् ॥ १२६ ॥ यस्य नास्ति प्रियः कश्चिन्न द्वेष्यश्चापि भारत ॥ कर्मसाक्षी प्रजानां यस्तेन कालेन ते हताः ॥ १२७ ॥ तेषामपि च राजेंद्र कर्माणि परिचिंतय ॥ विनाशहेतुभूतानि यैस्ते मृत्युवशं गताः ॥ १२८ ॥ आत्मनस्तु विजानीहि नियमव्रतशीलताम् ॥ कर्मेदृशं तथापि त्वं विधिना क्रमकारितः ॥ १२९ ॥ किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः ॥ प्रायेण मनुजानां हि बुद्धिः कर्मानुसारिणी ॥ १३० ॥ सन्निमज्जेज्जगदिदं गंभीरे कालसागरे ॥ मृत्युरोगजराग्राहे न कश्चिदवबुध्यते ॥ १३१ ॥ निर्मीय शिल्पिना धात्रा लोका वै गुडपाकवत् ॥ स्वकर्मेंधनसंवृताः पच्यते कालवह्निना ॥ १३२ ॥ बीजं पिता क्षेत्रमयी जनित्री वृष्टिस्तु

कर्माणि शुभाशुभानि ॥ भूतानि सस्यप्रतिमानि लोके जातानि जातानि लुनाति कालः ॥ १३३ ॥ तस्मात्कालकृतं ज्ञात्वा त्वमिमं पृथिवीक्षयम् ॥ ज्ञातिबंधुवधोद्भूतं त्यज शोकं नरेश्वर ॥१३४॥ वासुदेव उवाच ॥ ऋषिरेष त्रिकालज्ञो भवतां च हिते रतः ॥ यदाह भगवान्व्यासस्तत्कुरुष्व नृपोत्तम ॥ १३५ ॥ शोकमोहभयग्रस्ताश्चिरं शोचंत्यबुद्धयः ॥ महांतस्तु महाराज क्षणं शोचंति मानवाः ॥ १३६ ॥ वैशंपायन उवाच ॥ एवं तदानुनीतोऽसौ कृष्णद्वैपायनादिभिः ॥ कृष्णेन सहितैः सर्वैरुत्तस्थौ भ्रातृभिः सह ॥ १३७ ॥ स तैः परिवृतः श्रीमान्ग्रहैरिव निशाकरः ॥ दुःखेन महताविष्टो जगामाथ पितामहम् ॥ १३८ ॥

इति श्रीमदितिहाससमुच्चये युधिष्ठिरशोकापनोदोपाख्यानं नाम प्रथमोऽध्यायः॥ १ ॥

## द्वितीयोऽध्यायः २ ।

जनमेजय उवाच ॥ गांगेयस्य समीपस्थो भ्रातृभिः सहितस्तदा ॥ एतदाख्याहि मे ब्रह्मन् किं चकार युधिष्ठिरः ॥ १ ॥ वैशंपायन उवाच ॥ शिष्टो[1] व्यासेन राजेंद्र कृष्णेन च महात्मना ॥ ज्ञातिशोकपरीतात्मा भीष्मं पुनरभाषत ॥ २ ॥ युधिष्ठिर उवाच ॥ शमो बहुविधाकारो व्यासेनोक्तः पितामह ॥ न च मेऽस्ति मनःशांतिः पापं कृत्वेह दारुणम् ॥ ३ ॥ अहं तवाप्यंतकरो ज्ञातिक्षयकरस्तथा ॥ न शांतिमधिगच्छामि दुष्कृतान्यनुचिंतयन् ॥ ४ ॥ रुधिरेणावसिक्तांगं प्रस्रवंतं यथा बलम् ॥ त्वां दृष्ट्वा शरसंतप्तं सीदे वर्षास्विवांबुजम् ॥ ५ ॥ देवव्रतं महात्मानं सत्यधर्मपरायणम् ॥ हत्वा भवंतं जित्वैवं लोकान् प्राप्स्यामि कानहम् ॥ ६ ॥ यथास्मात्सुमहाघोरान्मुच्येयं किल्बिषादहम् ॥ तथानुशाधि मां राजन् मम चेदिच्छसि प्रियम् ॥ ७ ॥

---

१ शिक्षित इत्यर्थः ।

भीष्म उवाच ॥ परतंत्रं कथं हेतुमात्मानं यदि मन्यसे ॥ कर्मण्यस्मिन्महाराज सूक्ष्मं ह्येतदतींद्रियम् ॥ ८ ॥ मनः कर्ममयं प्राहुः सर्वप्राणिभृतां बुधाः ॥ तत्तथा चेष्टते तेषां भावि कर्मफलं यथा ॥९॥ यद्यभावि न तद्भावि भावि चेन्न तदन्यथा ॥ इति चिंताविषघ्नोऽयमगदः किन्न पीयते ॥ १० ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ ११ ॥ ब्राह्मणी गौतमी नाम स्थविराश्रमसंयुता ॥ सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतसम् ॥ १२ ॥ अथ तं स्नायुपाशेन बद्धा सर्पमकर्षत ॥ लुब्धको गौतमो नाम गौतम्याः समुपानयत् ॥१३॥ तामब्रवीदयं साध्वि पुत्रहा पन्नगाधमः ॥ ब्रूहि शीघ्रं महाभागे वध्यतां यदि मन्यसे ॥ १४ ॥ गौतम्युवाच ॥ नास्मिन् हते लुब्धक पुत्रको मे प्राप्स्यत्ययं जीवितं वै कथंचित् ॥ गुणं स्वल्पं नास्य वधात्समीक्षे तस्मात्सर्पं लुब्धक मुंच दीनम् ॥ १५ ॥ व्याधिरग्निर्विषं शस्त्रं क्षुत्सर्पाः पशवो जलम् ॥ निर्याणं यस्य निर्दिष्टं तेन गच्छंति जंतवः ॥ १६ ॥ न पापे अतिपापं स्यात्साधुरेव सदा भवेत् ॥ आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ॥ १७ ॥ दग्धं हिंस्रोऽनुदहति हतमेवानुहंति च ॥ मृतं मारयते चैव न पापे पापमाचरेत् ॥ १८ ॥ महामोहहतान्पूर्वं यो जंतून्हंति निर्दयः ॥ स प्रेत्य नरकं याति नृशंसो मृतमारकः ॥ १९ ॥ लुब्धक उवाच ॥ न पापानां वधे पापं विद्यते किल भामिनि ॥ तस्मादेनं वधिष्यामि नृशंसं शिशुघातिनम् ॥ २० ॥ गौतम्युवाच ॥ सुलभाः पुरुषा लोके साधवः साधुकारिषु ॥ असाधुषु पुनः साधुर्दुर्लभः पुरुषो भुवि ॥ २१ ॥ ये साधवः सुजन्मानः तैरियं धारिता च भूः ॥ अपकारिषु भूतेषु ये भवंत्युपकारिणः ॥ २२ ॥ दुःखितेभ्यो हि भूतेभ्यो मृत्युरोगजरादिभिः ॥ भूयः को दुःखमपरं सघृणो दातुमर्हति ॥२३॥ दुःखं ददाति योऽन्यस्य भूयो दुःखं स विंदति ॥ तस्मान्न कस्यचिद्दुःखं दातव्यं दुःखभीरुणा ॥२४॥

दत्ते दुःखे च यो दुःखं न प्रयच्छति धैर्यतः ॥ स वै पुण्यो नरश्रेष्ठो जीवेच्च शरदां शतम् ॥२५॥ सुमहत्यापि दुःखे तु कृते यन्न भवेदिह ॥ कथं न छिद्यते जंतुर्यन्न भूयः प्ररोहति ॥ २६ ॥ भीष्म उवाच ॥ असकृत्प्रोच्यमानापि गौतमी भुजगं प्रति ॥ लुब्धकेन महाभागा सा पापे नाकरोन्मतिम् ॥ २७ ॥ अनादिनिधनो योऽसौ जगतः कारणं परम् ॥ लोके स कालः पचति वृक्षे फलमिवाहितम् ॥२८॥ बीजे योनौ तथाहारे व्यवहारे च यः सुधीः ॥ तस्य कृच्छ्रगतस्यापि न पापे रमते मतिः ॥ २९ ॥ नोद्यमानेषु पापेषु श्रद्धात्मा न प्रवर्तते ॥ वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ॥३० ॥ विद्वद्भिः शास्यमानोऽपि पापकर्मरतिर्नरः ॥ कृष्यमाण इवांगारो निर्मलत्वं न गच्छति ॥ ३१ ॥ जन्मांतरसहस्रेषु या बुद्धिर्भविता पुरा ॥ तामेव भजते जंतुरुपदेशो निरर्थकः ॥ ३२ ॥ ततः समुच्छ्वसन्नीचः कृच्छ्रात्संस्तभ्य पन्नगः ॥ उत्ससर्ज गिरं मंदां मानुषीं पाशपीडितः ॥ ३३ ॥ पन्नग उवाच ॥ कोऽन्वर्जुनक दोषोऽत्र विधत्ते मम बालिश ॥ अस्वतंत्रं हि मां मृत्युर्विवशं समनूनुदत् ॥ ३४ ॥ तस्यैवं वचनादृष्टो न क्रोधान्न च काम्यया ॥ तस्मात्तस्यैव यत्पापं पापं यद्यत्र विद्यते ॥ ३५ ॥ भीष्म उवाच ॥ तथा ब्रुवति तस्मिंस्तु भुजगे मृत्युनोदिते ॥ आजगाम ततो मृत्युः पन्नगं चेदमब्रवीत् ॥ ३६ ॥ मृत्युरुवाच ॥ कालेन नोदितश्चाहं पन्नग त्वामनूनुदम् ॥ विनाशहेतुः कालोऽस्य शिशोर्नाहं तथा भवान् ॥ ३७ ॥ जंगमा स्थावराश्चैव दिवि वा यदि वादिवि ॥ सर्वे कालवशं यांति कालात्मकमिदं जगत् ॥ ३८ ॥ अनादिनिधनो योऽसौ जगतः कारणं परम् ॥ लोके स कालः पचति वृक्षे फलमिवाहितम् ॥ ३९ ॥ दमः शमस्तपो दानं न मित्राणि न बांधवाः ॥ शक्नुवंति

१ पुण्यमस्यास्तीति अर्श आद्यच् । यद्वा पापः पुरुष इतिवल्लक्षणया पुण्यशब्दः पुण्यस्य कर्त्तरि शक्तः ॥

परित्रातुं नरं कालेन पीडितम् ॥ ४० ॥ यत्र कालकृतात्पाशाच्छक्यते न निवर्तितुम् ॥ विवाहो जन्म मरणं यदा यत्र च येन च ॥ ४१ ॥ यथा जलधरा व्योम्नि भ्राम्यन्ते मातरिश्वना ॥ तथैव कर्मयुक्तेन कालेन भ्राम्यते जगत् ॥ ४२ ॥ भीष्म उवाच ॥ अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंकटे ॥ अब्रवीत्पन्नगं मृत्युं तं चार्जुनकलुब्धकम् ॥ ॥ ४३ ॥ काल उवाच ॥ न धाताहं न वा मृत्युर्नेमौ लुब्धकपन्नगौ ॥ हेतवो जन्ममरणे न वयं हि प्रणोदकाः ॥ ४४ ॥ यदनेन कृतं कर्म तदर्जुनकनोदनम् ॥ विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ ४५ ॥ कर्मदायादवाँल्लोके कर्मसंबंधिबांधवाः ॥ कर्माणि नोदयंतीह पुरुषं सुखदुःखयोः ॥ ४६ ॥ सुवर्णं रजतं वापि यथारूपं निसृज्यते ॥ तथा निसृज्यते जंतुः पूर्वकर्मवशानुगः ॥४७॥ पंचैतानि निसृज्यंते गर्भस्थस्यैव देहिनः ॥ आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ ४८ ॥ यथा मृत्पिंडकं कृत्वा कुरुते यद्यदिच्छति ॥ तथा पूर्वकृतं कर्म कर्तारं प्रतिपद्यते ॥ ४९ ॥ देवत्वमथ मानुष्यं पशुत्वं पक्षितां तथा ॥ तिर्यक्त्वं स्थावरत्वं च याति जंतुः स्वकर्मभिः ॥ ५० ॥ अचिंत्यमानानि यथा पुष्पाणि च फलानि च ॥ स्वकालं नातिवर्तंते तथा कर्म पुराकृतम् ॥ ५१ ॥ येनैव यद्यथा पूर्वं कृतं कर्म शुभाशुभम् ॥ स एव तत्तथा भुंक्ते नित्यं विहितमात्मना ॥५२॥ आत्मना विहितं दुःखमात्मना विहितं सुखम् ॥ गर्भशय्यामुपादाय भुंजते सर्वदैहिकम् ॥ ५३ ॥ पूर्वदेहकृतं कर्म न कश्चित्पुरुषो भुवि ॥ बलेन प्रज्ञया वापि समर्थः कर्तुमन्यथा ॥ ५४ ॥ अन्यथा शास्त्रगर्भिण्या धिया धीरोऽर्थमीहते ॥ स्वामिनं प्राक्तनं कर्म विदधाति न चान्यथा ॥ ५५ ॥ स्वकृतान्युपभुजंति दुःखानि च सुखानि च ॥ हेतुभूतो हि यस्तेषां सोऽहंकारेण बध्यते ॥ ५६ ॥ यथा धेनुसहस्रेषु वत्सो विंदति मातरम् ॥ तथा शुभाशुभं कर्म कर्तारमनुगच्छति ॥५७॥

उपभोगादृते यस्य नाश एव न विद्यते ॥ प्राक्तनं बलवत्कर्म कोऽन्यथाकर्तुमर्हति ॥ ५८ ॥ सुशीघ्रमपि धावंतं विधानमनुगच्छति ॥ शेते सह शयानेन पुरा येनेह यत्कृतम् ॥ ५९ ॥ उपतिष्ठति तिष्ठंतं गच्छन्तमनुगच्छति ॥ करोति कुर्वतः कर्म छायेवानुगतं हि तत् ॥ ६० ॥ यथा छायातपौ नित्यं सुसंबद्धौ परस्परम् ॥ तथा कर्म च कर्त्ता च संबद्धौ नात्र संशयः ॥ ६१ ॥ अहिरोगविषस्तेनराजानः शकुनादयः ॥ पीडयंति नरं पश्चात्पीडितं पूर्वकर्मणा ॥ ६२ ॥ येन यत्रोपगंतव्यं सुखं वा दुःखमेव वा ॥ स तत्र बद्धा रज्ज्वैव बलादेव विनीयते ॥ ६३ ॥ दैवं प्रमाणं भूतानां सुखदुःखोपपादने ॥ अन्यथा कर्म तन्नित्यं जाग्रतः स्वपतोऽपि वा ॥ ६४ ॥ अन्यथाभ्युदितं दैवं बध्यमेव जिघांसति ॥ शस्त्राग्निविषदुर्गेभ्यो रक्षितव्यं च रक्षति ॥ ६५ ॥ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ॥ जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ६६ ॥ यथा पृथिव्यां बीजानि अन्नानि च धनानि च ॥ तथैवात्मनि कर्माणि तिष्ठंति भरतर्षभ ॥ ६७ ॥ तैलक्षयाद्यथा दीपो निर्वाणमधिगच्छति ॥ कर्मक्षयात्तथा जंतोः शरीरं नाधिगच्छति ॥ ६८ ॥ कर्मक्षयात्तथा मृत्युर्विद्वद्भिः समुदाहृतः ॥ विविधाः प्राणिनस्तेषां स्मृता रोगाश्च हेतवः ॥ ६९ ॥ तस्मान्नाहं न वा मृत्युर्नैतौ लुब्धकपन्नगौ ॥ न चेयं ब्राह्मणी वृद्धा शिशोरेवात्र कारणम् ॥ ७० ॥ दुःखानां च सुखानां च जन्मनो मरणस्य च ॥ आत्मैव ह्यात्मनो हेतुश्चित्रभानोरिवारणिः ॥ ७१ ॥ भीष्म उवाच ॥ एवमुक्त्वा तु कालेन ब्राह्मणी गौतमी ततः ॥ स्वकर्मप्रत्ययाँल्लोकान्मत्वार्जुनकमब्रवीत् ॥ ७२ ॥ गौतम्युवाच ॥ नैव कालो न भुजगो न मृत्युरिह कारणम् ॥ स्वकर्मभिरयं बालः कालेन निधनं गतः ॥ ७३ ॥ मया ह्येतत्कृतं कर्म येनायं मे मृतः सुतः ॥ यातु कालस्तथा मृत्युर्मुंचार्जुनक पन्नगम् ॥ ७४ ॥

भीष्म उवाच ॥ ततो यथागतं जग्मुः कालमृत्युभुजंगमाः ॥ अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी ॥७५॥ एतज्ज्ञात्वा शमं गच्छ मा भूश्चितापरो नृप ॥ स्वकर्मप्रत्ययाँल्लोकांस्त्रीनिमान्विद्धि भारत ॥ ७६॥ न तत्कृतं त्वया कर्म न च दुर्योधनादिभिः ॥ कालेन तत्कृतं कर्म निहता येन पार्थिवाः ॥७७॥ वैशंपायन उवाच ॥ इति तस्य वचः श्रुत्वा धर्मपुत्रो युधिष्ठिरः ॥ ज्ञातिशोकं परित्यज्य बभूव स्वस्थमानसः ॥ ७८ ॥

इति श्रीमदितिहाससमुच्चये गौतम्युपाख्याने द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ३ ।

वैशंपायन उवाच ॥ इत्युक्तवचने भीष्मे कृष्णे च यदुनंदने ॥ स राजा राजशार्दूलो व्यासं पुनरभाषत ॥ १ ॥ युधिष्ठिर उवाच ॥ दानस्य तपसो वापि भगवन् किन्नु दुष्करम् ॥ किं वा महाफलं प्रेत्य तन्मे ब्रूहि पितामह ॥ २ ॥ वेदव्यास उवाच ॥ दानान्न दुष्करतरं पृथिव्यामस्ति किंचन ॥ राजन्प्रत्यक्षमेवैतद्दृश्यते लोकसाक्षिकम् ॥ ३ ॥ परित्यज्य प्रियान्प्राणान्सुहृदो धनकांक्षया ॥ प्रविशंति नरा लोभात्समुद्रमटवीं तथा ॥ ४ ॥ सेवामन्ये प्रपद्यंते धनिनां धनकांक्षया ॥ हिंसाप्रायान्बहून्क्लेशान् कृषिं चैव तथा परे ॥ ५ ॥ तस्य दुःखार्जितस्येह प्राणेभ्योऽपि गरीयसः ॥ अर्थस्य पुरुषव्याघ्र परित्यागः सुदुष्करः ॥ ६ ॥ विशेषतो महाराज तस्य न्यायार्जितस्य च ॥ श्रद्धया विधिवत्पात्रे दत्तस्यांतो न विद्यते ॥ ७ ॥ श्रद्धा धर्मसुता देवी पावनी विश्वधारिणी ॥ सावित्री प्रसवित्री च संसारार्णवतारिणी ॥ ८ ॥ श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ॥ निष्किंचनापि मुनयः श्रद्धावंतो दिवं गताः ॥ ९ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ द्रोणव्रीहिपरित्यागाद्यत्फलं प्राप मुद्गलः ॥ १० ॥ शिलोंछवृत्तिर्धर्मात्मा कुरुक्षेत्रेऽवसत्पुरा ॥ महर्षिर्मुद्गलो नाम दांतोऽतीव प्रियातिथिः ॥११॥

१ सन्धिरार्षः ।

स्वाध्यायश्रुतसंपन्नः सत्यवागनुसूयकः ॥ जितेंद्रियो जितक्रोधः साक्षाद्ब्रह्म इवापरम् ॥ १२ ॥ उञ्छवृत्त्या स पक्षेण व्रीहिद्रोणमुपार्जयत् ॥ सपुत्रदारः पक्षांते सोऽभूच्चातिथिशेषभुक् ॥१३॥ तं श्रुत्वाद्भुतकर्माणं दुर्वासा द्रष्टुमागमत् ॥ उन्मत्तरूपो दिग्वासा व्याहरद्विविधा गिरः ॥ १४ ॥ अथोपगम्य स प्राह मुद्गलं शंसितव्रतम् ॥ अन्नार्थिनमनुप्राप्तं विद्धि मामतिथिं मुने ॥ १५ ॥ ततस्तं मुद्गलो दृष्ट्वा प्रीतात्मा प्रत्यपूजयत् ॥ उवाच चैनं मधुरैर्वचोभिस्तर्पयन्निव ॥ १६ ॥ मुद्गल उवाच ॥ अहोऽतीव सभाग्योऽहं यस्य मे त्वं द्विजोत्तम ॥ मनोरथ इवाध्यातो वेलायां समुपस्थितः ॥ १७ ॥ त्वदागमनजेनाद्य हर्षेणाविष्टचेतसः ॥ महोत्सव इव ब्रह्मन् दिवसः प्रतिभाति मे ॥ १८ ॥ श्रीवेदव्यास उवाच ॥ एवमुक्त्वा यथान्यायं समभ्यर्च्य स धर्मवित् ॥ शिलोंछार्जितमन्नं तत्प्रादात्तस्मै मुदान्वितः ॥ १९ ॥ तद्भुक्त्वा सर्वमेवासौ तेन श्रद्धोपपादितम् ॥ स्वांगान्यालिप्य शेषेण प्रययौ हि यथागतम् ॥ २० ॥ तस्यैवं पर्वकाले तु प्राप्ते प्राप्ते महात्मनः ॥ आगम्य बुभुजे सोऽन्नं सत्कृतः सर्वमेव तत् ॥ २१ ॥ न चैवं विक्रिया तस्य शशांकस्यैव मानसे ॥ न क्रोधो न च कार्पण्यं नावमानो न मत्सरः ॥ तं शुद्धभावमाज्ञाय प्रीतः प्रोवाच स द्विजः ॥ २२ ॥ दुर्वासा उवाच ॥ लोके त्वत्सदृशो दाता न भूतो न भविष्यति ॥ योऽधर्मसंज्ञां प्रणुतां नाशयेत्स्वयमेव च ॥ यो दुर्जयां तां जयति तेन स्वर्गो जितो भवेत् ॥ २३ ॥ जितस्ते दुर्जयः कामः क्रोधलोभावुभावपि ॥ पैशुन्यं मत्सरो माया मानः कार्पण्यमेव च ॥ २४ ॥ जितास्ते कर्मभिर्लोकाः प्राप्नोषि परमां गतिम् ॥ अहो दानं निघुष्टं ते सुमहत्स्वर्गवासिभिः ॥२५॥ इंद्रियाणां जयो धैर्यं तपः सत्यं क्षमार्जवम् ॥ दया दानं दमश्चैव त्वयि सर्वं प्रतिष्ठितम् ॥ २६ ॥ लोकाः समस्ता धैर्येण धार्यंते सचराचराः ॥ धर्मोऽपि धार्यते ब्रह्मन् स्तंभभूतैर्भवादृशैः ॥ २७ ॥ धन्योऽस्म्यनुगृ-

हीतोऽस्मि समेत्य भवता सह ॥ सद्भिः समागतो नित्यं सर्वपापहरः स्मृतः ॥ २८ ॥ इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ॥ देवदूतो विमानेन मुद्गलं समुपस्थितः ॥२९॥ वेदव्यास उवाच ॥ दिव्यरत्नविचित्रेण किंकिणीजालमालिना ॥ सर्वकामसमृद्धेन कामगेन सुवर्चसा ॥ ३० ॥ उवाच चैनं विप्रर्षे विमानवरमारुह ॥ स्वकर्मोपार्जितां दिव्यां सिद्धिं प्राप्तोऽस्यनुत्तमाम् ॥ ३१ ॥ दिवि देवाः सदेवेंद्राः पुण्या ब्रह्मर्षयस्तथा ॥ समुत्सुकाश्च तिष्ठंति कांक्षंतस्तव दर्शनम् ॥ ३२ ॥ मुद्गल उवाच ॥ सतां साप्तपदी मैत्री इति प्राहुर्मनीषिणः ॥ अतः पृच्छामि विश्रंभात्त्वामहं हितकाम्यया ॥ ३३ ॥ के गुणा वसतां स्वर्गे दोषा वा देवदूतक ॥ एतद्ब्रूहि ततः पश्चात्करिष्ये ह्यात्मनः क्षमम् ॥ ३४ ॥ देवदूत उवाच ॥ महर्षे गुरुबुद्धिस्त्वं यत्स्वर्गे सुखमुत्तमम् ॥ संप्राप्तं बहु मंतव्यं विमृशस्व बुधो यथा ॥ ३५ ॥ नंदनादीनि रम्याणि तत्रोद्यानानि मुद्गल ॥ सर्वकामफलैर्वृक्षैः शोभितानि समंततः ॥ ३६ ॥ विमानानि च दिव्यानि सेवितान्यप्सरोगणैः ॥ सर्वरत्नविचित्राणि कामगानि स्थिराणि च ॥ ३७ ॥ तरुणादित्यवर्णानि मुक्ताजालांतराणि च ॥ चंद्रमंडलशुभ्राणि हेमशय्यासनानि च ॥ ३८ ॥ सर्वकामसमृद्धाश्च सर्वदुःखविवर्जिताः ॥ नराः सुकृतिनस्तत्र विचरंति यथासुखम् ॥ ३९ ॥ न तत्र नास्तिका यांति न स्तेना नाजितेंद्रियाः ॥ न नृशंसा न पिशुना न कृतघ्ना न मायिनः ॥ ४० ॥ सत्यास्तपस्विनः शूरा दयावन्तः क्षमापराः ॥ यज्वानो दानशीलाश्च तत्र गच्छान्ति मुद्गल ॥ ४१ ॥ न रोगो न जरा मृत्युर्न शोको न हिमातपौ ॥ न तत्र क्षुत्पिपासे वै विद्येते ग्लानिरेव च ॥ ४२ ॥ एते चान्ये च बहवो गुणाः स्वर्गस्य मुद्गल ॥ दोषास्तु तत्र ये विप्र शृणु तानपि सांप्रतम् ॥ ४३ ॥ शुभस्य कर्मणः कृत्स्नं फलं तत्रोपभुज्यते ॥ न चान्यैः क्रियते

भूयः सोऽत्र दोषो महान् स्मृतः ॥ ४४ ॥ असंतोषश्च भवति दृष्ट्वा दीप्तां पराश्रियम् ॥ सुखव्याप्तमनस्कानां सहसा पतनं ततः ॥ ४५ ॥ इह यत्क्रियते कर्म फलं तत्रैव भुज्यते ॥ कर्मभूमिरियं ब्रह्मन् फलभूमिरसौ स्मृता ॥ ४६ ॥ मुद्गल उवाच ॥ महांतः खल्विमे दोषास्त्वया स्वर्गस्य कीर्तिताः ॥ निर्दोषः शाश्वतश्चान्यो यो लोकस्त्वं वदस्व मे ॥ ४७ ॥ देवदूत उवाच ॥ आ ब्रह्मसदनादेव दोषाः संति महामुने ॥ अत एव च नेच्छन्ति स्वर्गप्राप्तिं मनीषिणः ॥ ४८ ॥ ब्रह्मणः सदनादूर्द्ध्वं तद्विष्णोः परमं पदम् ॥ शुभं सनातनं ज्योतिः परब्रह्मेति तद्विदुः ॥ ४९ ॥ न तत्र मूढा गच्छंति पुरुषा विषयात्मकाः ॥ क्रोध-मोहमदद्रोहदंभलोभैरभिद्रुताः ॥ ५० ॥ निर्ममा निरहंकारा निर्द्वंद्वाः संयतेंद्रियाः ॥ ध्यानयोगरताः शांतास्तत्र गच्छंति साधवः ॥ ५१ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ विमान-मारुह क्षिप्रं गच्छावस्त्रिदशालयम् ॥ ५२ ॥ श्रीवेदव्यास उवाच ॥ एतज्ज्ञात्वा स तु मुनिस्तं दूतं प्रत्यभाषत ॥ नाहं स्वर्गं गमिष्यामि त्वं गच्छाशु यथासुखम् ॥ ५३ ॥ देवराजश्च देवाश्च दिव्या ब्रह्मर्ष-यस्तथा ॥ वंद्याः क्षमयितव्याश्च भवता वचनान्मम ॥ ५४ ॥ वेद-व्यास उवाच ॥ इत्येवमुक्त्वा धर्मात्मा देवदूतं महामतिः ॥ सुखेषु निः-स्पृहः स्वर्गे पुनरावृत्तिनिश्चयः ॥ ५५ ॥ ततो विसृज्य तं दूतं मुद्गलः स्वर्गनिस्पृहः ॥ सर्वान्कामान् परित्यज्य ध्यानयोगपरोऽभवत् ॥ ५६ ॥ एकांतरतिरासीनो निर्ममो निरहंकृतिः ॥ सर्वद्वंद्वसहो धीरः सर्वभूतहिते रतः ॥ ५७ ॥ निगृहीतेंद्रियग्रामो युयोज मन आत्मनि ॥ युक्तचित्तस्तदात्मानं युयोज परमेश्वरे ॥ ५८ ॥ एवं स परमास्थाय योगं योगविदां वरः ॥ प्राप्तवांस्तत्परं धाम दुष्प्रापं यत्सु-रैरपि ॥ ५९ ॥ तस्मात्त्वमपि राजेंद्र देहि न्यायार्जितं धनम् ॥ दाना-ज्ज्ञानं च तत्प्राप्य ज्ञानात् सिद्धिं च यास्यसि ॥ ६० ॥ नारायणं

जगद्योनिं कूटस्थमचलात्मकम् ॥ ये निस्पृहाः प्रपद्यंते तमेव परमं पदम् ॥ ६१ ॥ य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ६२ ॥ हरिं समाधाय हिरण्यरूपिणं स मुद्गलः स्वर्गसुखेषु निस्पृहः ॥ जगाम सायुज्यमहार्यनिश्चयो रथांगिणस्तत्त्वनिविष्टमानसः ॥ ६३ ॥

इति श्रीमदितिहाससमुच्चये मुद्गलोपाख्यानं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ४ ।

वैशंपायन उवाच ॥ कथयंतं हितार्थानां प्रभावानद्भुतांस्तथा ॥ रोमशं धर्मतत्वज्ञं पर्य्यपृच्छद्युधिष्ठिरः ॥ १ ॥ युधिष्ठिर उवाच ॥ यो रक्षेत्प्राणिनं राजा भयात्तं शरणागतम् ॥ तस्य पुण्यफलं यत्स्यात्तन्मे ब्रूहि तपोधन ॥ २॥ रोमश उवाच ॥ एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः ॥ एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥३ ॥ एतदेव पुरा देवा तुलया समतोलयन् ॥ प्राणरक्षणमेवेह गौरवेणातिरिच्यते ॥ ४ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ इंद्रस्याग्नेश्च संवादं शिबेरौशीनरस्य च ॥५॥ वर्त्तमाने महायज्ञे जिज्ञासार्थं शिबिं नृपम् ॥ इंद्रः श्येनः कपोतोऽग्निर्भूत्वा तत्रोपजग्मतुः ॥ ६ ॥ अथ तं नृपतिं प्राप्य कपोतः श्येनतो भयात् ॥ शरणार्थी महीपालं निलिल्ये भयविह्वलः ॥ ७ ॥ ततः शनैरुपागम्य श्येनरूपी सुरेश्वरः ॥ राजानं सुमहात्मानं प्रोवाचेदं वचस्तदा ॥ ८ ॥ श्येन उवाच ॥ धर्मात्मानं भुवि प्राहुरेकं त्वाद्यमहीक्षितम् ॥ त्वं वै शरणदानेन रक्ष मां पीडितं क्षुधा ॥ ९ ॥ धर्मबुध्या त्वया धर्मः क्रियते सूक्ष्मबुद्धिना ॥ स त्वं धर्मविशुद्धेन कथं धर्मं चिकीर्षसि ॥ १० ॥ भवान् कृतघ्नं दानेन सत्येनानृतवादिनम् ॥ क्षमया क्रूरकर्माणमसाधुं साधुना जयेत् ॥ ११ ॥

कोऽयं धर्मस्तवेदानीमहं विस्मयमीयिवान् ॥ असाधुः पाल्यते राजन् साधुर्वै पाल्यते त्वया ॥ १२ ॥ नापकारापरेष्वेवमुपकारपरो जनः ॥ अपकारपरेऽपि त्वमुपकारपरो जनः ॥ १३ ॥ अहिते हितबुद्धिस्त्वं पापेषु त्वमपापकृत् ॥ दोषान्वेषणदक्षोऽपि गुणान्वेषणतत्परः ॥ १४ ॥ तदेष विहितो भक्षः पीड्यमानस्य मे क्षुधा ॥ मा हिंसीर्लोभतो धर्मं धर्ममुत्सृष्टवानसि ॥ १५ ॥ राजोवाच ॥ संत्रस्तरूपी त्राणार्थी त्वत्तो भीतो विहंगमः ॥ मत्सकाशमनुप्राप्तः पाल्योऽयं ध्रुवं खगः ॥ १६ ॥ तदेवमागतस्यास्य कपोतस्य मयार्थिनः ॥ कथमस्मद्विधः कुर्यात्त्यागं सद्भिर्विगर्हितम् ॥ १७ ॥ लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम् ॥ ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥ १८ ॥ शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ॥ शरणागतहंतुस्तु न दृष्टा निष्कृतिः क्वचित् ॥ १९ ॥ यथात्मनः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा ॥ तस्मान्मृत्युभयत्रस्तास्त्रातव्याः प्राणिनो बुधैः ॥ २० ॥ जन्ममृत्युजरादुःखैर्नित्यं संसारसागरे ॥ जंतवः परिक्लिश्यंते मृत्योस्त्रस्यंति ते तथा ॥ २१ ॥ यन्निमित्तं भवेद्दोषस्त्रासो वा क्रोध एव वा ॥ आयासो वा यथा दुष्टमेकांतमपि न त्यजेत् ॥ २२ ॥ मरिष्यामीति यद्दुःखं पुरुषस्योपजायते ॥ ज्ञेयस्तेनानुमानेन परोऽपि परिरक्षितुम् ॥ २३ ॥ यथा च ते जीवितमात्मनः प्रियं तथा परेषामपि जीवितं प्रियम् ॥ संरक्षसे जीवितमात्मनो यथा तथा परेषामपि रक्ष जीवितम् ॥ २४ ॥ तस्मान्नाहमिमं दीनमर्पयिष्ये कपोतकम् ॥ यदत्र युक्तमन्यं ते वक्तुं श्येनाशु तद्वद ॥ २५ ॥ प्रायशः पुरुषा लोके सर्वभूतदयापराः ॥ गच्छंति ब्रह्मसदनमिति प्राहुर्मनीषिणः ॥ २६ ॥ महतामपि यज्ञानां कालेन क्षीयते फलम् ॥ भीताभयप्रदानस्य कलां नार्हंति षोडशीम् ॥ २७ ॥

१ अजानतोऽपीन्द्रं तद्वारत्येवं जगाद।

चतुःसागरपर्यंतां यो दद्यात्पृथिवीमिमाम् ॥ अभयं सर्वभूतेभ्यस्तयोरभयदोऽधिकः ॥ २८ ॥ अपि त्यजे राज्यमिदं शरीरं च सुदुस्त्यजम् ॥ नागतं भयसंत्रस्तं त्यक्ष्ये दीनं कपोतकम् ॥ २९ ॥ यन्मे स्यात्तु शुभं किंचिदर्जितं पूर्वजन्मनि ॥ तेनाद्य वै भयार्त्तानामार्तिनाशाय देहिनाम् ॥ ३० ॥ न ह्यहं कामये राज्यं न स्वर्गं नापुनर्भवम् ॥ प्राणिनां दुःखतप्तानां कामये दुःखनाशनम् ॥ ३१ ॥ यथा च नानृता वाणी मया वै समुदाहृता ॥ सत्येनानेन भगवान् प्रसीदतु महेश्वरः ॥ ३२ ॥ आहारार्थं समारंभस्तव चायं विहंगमः ॥ यो य इष्टस्तवाहारो ह्यन्यं वद ददाम्यहम् ॥ ३३ ॥ श्येन उवाच ॥ एवं हि विहितोऽस्माकं धात्रा भक्षं कपोतकः ॥ तमेवोत्सृज्य नाहारैः कार्यमन्यैर्नरेश्वर ॥ ३४ ॥ आहारात्सर्वभूतानि संभवंति नरेश्वर ॥ आहारेण विवर्धंते तेन जीवंति जंतवः ॥ ३५ ॥ शक्यते दुष्करेऽप्यर्थे चिरं रात्रेण जीवितुम् ॥ न त्वाहारविहीनेन शक्यं वर्त्तयितुं चिरात् ॥ ३६ ॥ भक्ष्याद्विलोपितस्याद्य मम प्राणा विशांपते ॥ विसृज्य कायं यास्यंति पंथानमपुनर्भवम् ॥ ३७ ॥ मृते च मयि सर्वं मे पुत्रदारं मरिष्यति ॥ रक्षणेन कपोतस्य बहून्प्राणान्न रक्षसि ॥ ३८ ॥ यो धर्मं बाधते धर्मो न स धर्मः परंतप ॥ अविरोधी तु यो धर्मः स धर्मः सद्भिरुच्यते ॥ ३९ ॥ तस्माद्विरोधिधर्मस्य विचिंत्य गुरुलाघवम् ॥ यतो भूयांस्ततो राजन्कुरु धर्मविनिर्णयम् ॥ ४० ॥ राजोवाच ॥ नास्ति सत्यात्परो धर्मः कश्चिदन्यो हि खेचरः ॥ प्राणिनां भयभीतानामभयं यः प्रयच्छति ॥ ४१ ॥ वरमेतस्य सत्वस्य प्रदत्ताभयदक्षिणा ॥ न च वाजिसहस्रस्य गोसहस्रमलंकृतम् ॥ ४२ ॥ अभयं सर्वभूतेभ्यो यो ददाति दयापरः ॥ तस्य देहाद्विमुक्तस्य क्षय एव न विद्यते ॥ ४३ ॥ हेमधेनुधरादीनां दातारः सुलभा भुवि ॥ दुर्लभः पुरुषो लोके सर्वभूतदयापरः ॥ ४४ ॥ श्येन उवाच ॥ श्येनाः कपोतान्खादंति

श्रुतिरेषा सनातनी ॥ मा राजन् सारमज्ञात्वा कदलीस्तंभमारुह ॥ पीयूषबुद्धिमास्थाय विषमश्नासि केवलम् ॥ ४५ ॥ राजोवाच ॥ नाहं कुशास्त्रमार्गेण क्वचिद्वर्त्तें विहंगम ॥ शास्त्रे चैवोपदिष्टोऽयं धर्मः सत्वदयापरः ॥ ४६ ॥ सर्वसत्वेषु यद्दानमेकसत्वे च या दया ॥ सर्वसत्वप्रदानात्तु दयैका च विशिष्यते ॥ ४७ ॥ सर्वे वेदा न तत्कुर्युः सर्वे यज्ञाश्च खेचर ॥ सर्वतीर्थाभिषेको यो यः कुर्यान्प्राणिनां दयाम् ॥ ४८ ॥ वाङ्मनःकर्मभिर्ये तु सर्वभूतहिते रताः ॥ दयादमितपाप्मानो ब्रह्मलोकं व्रजंति ते ॥ ४९ ॥ गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ॥ यन्न भूतहितार्थाय तत्पशोरिव जीवितम् ॥ ५० ॥ जंगमानि च भूतानि स्थावराणि च ये नराः ॥ आत्मवत्परिरक्षंति ते यांति परमां गतिम् ॥ ५१ ॥ प्राणिनां वध्यमानानां यः कश्चित्समुपेक्षते ॥ स याति नरकं घोरमिति प्राहुर्मनीषिणः ॥ ५२ ॥ राज्यं हि सकलं चैतत्प्रयच्छामि तव द्विज ॥ यदि कामयसे ह्यन्यं वर्जयित्वा कपोतकम् ॥५३॥ श्येन उवाच ॥ यदि राजन्कपोते ते सुदृढा भक्तिरीदृशी ॥ तत्त्वं कपोततुल्यानि स्वमांसानि प्रयच्छ मे ॥ ५४ ॥ राजोवाच ॥ अनुग्रहमिमं मन्ये यन्मां श्येनाभिभाषसे ॥ एतत्तेऽहं प्रयच्छामि स्वमांसं यावदिच्छसि ॥ ५५ ॥ यदप्रियं तत्स्वजनः कश्चिद्ददाति वा न वा ॥ मम तु प्रियमेवैतत्कस्मादभिहितं चिरात् ॥ ५६ ॥ अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ॥ ध्रुवं यो नार्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ ५७ ॥ यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते ॥ ततः किमुपचाराः स्युः प्रत्यक्षं क्रियते तथा ॥ ५८ ॥ श्येन उवाच ॥ नातिरिक्तमहं याचे तव मांसं नरेश्वर ॥ येनास्य रक्षणं मे स्यात्तद्विधत्स्व नरोत्तम ॥ ५९ ॥ रोमश उवाच ॥ एवमुक्तः स्वमांसानि तमुत्कृत्य च पार्थिवः ॥ प्रहृष्टस्तोलयामास कपोतेन सह प्रभुः ॥६०॥ त्यक्त्वात्मसुखभोगेच्छा सर्वसत्त्वसुखैषिणः ॥ भवंति परदुःखेषु साधवो नित्य-

दुःखिताः ॥ ६१ ॥ ध्रियमाणं तु तुलया कपोतेन समं सदा ॥ उत्कृत्य पललं तस्मात्कपोतस्त्वधिकोऽभवत् ॥ ततः प्रक्षीणमांसोऽसावारुरोह तुलां स्वयम् ॥ ६२ ॥ परदुःखातुरा नित्यं सर्वभूतहिते रताः ॥ नोपेक्षंते महात्मानः स्वसुखानि महांत्यपि ॥ ६३ ॥ अथ तस्मिन्समारूढे तुलामौशीनरे नृपे ॥ देवदुंदुभयो नेदुः पुष्पवृष्टिः पपात ह ॥ ६४ ॥ ततस्तस्य तदा मत्वा देवराजो धृतिं पराम् ॥ शक्रः स्वं रूपमास्थाय वाक्यमेतदभाषत ॥ ६५ ॥ इन्द्र उवाच ॥ इन्द्रोऽहमस्मि भद्रं ते कपोतो हव्यवाहनः ॥ जिज्ञासमानौ त्वां राजन्निमं यज्ञमुपागतौ ॥ ६६ ॥ नैतत्पूर्वे नृपाश्चक्रुर्न करिष्यंति चापरे ॥ महाकारुणिकेनेह यत्कृतं दुष्कृतं त्वया ॥ ६७ ॥ परार्थे त्यजतः प्राणान्या प्रीतिरभवत्तव ॥ प्राणसंशयलुब्धेषु न सा प्रायोऽस्ति देहिषु ॥ ६८ ॥ परार्थैकांतकल्याणी स्वाश्रयात्यंतनिष्ठुरा ॥ त्वय्येव केवलं राजन्करुणा करुणायते ॥ ६९ ॥ स्वकर्मपाशैः दुर्छेद्यैर्बद्धं कृत्स्नमिदं जगत् ॥ त्वं जगद्दुःखमोक्षार्थं बद्धः करुणया नृप ॥७०॥ यथा सर्वात्मना वापि दुःखेषु प्रहितं मनः ॥ तथा चैवात्मसंख्याने वासनापि न शोषिता ॥ ७१ ॥ प्रकृतेर्ष्या विशुद्धेषु न हीनानवमन्य च ॥ अगत्वा सदृशैः स्पर्द्धां त्वं लोकोत्तरतां गतः ॥ ७२ ॥ परोपकारजन्मानो विधात्रा विहितास्त्रयः ॥ सजला जलदास्त्वं च सफलाश्च महाद्रुमाः ॥ ७३ ॥ आत्मप्राणैः परप्राणान्यो नरः परिरक्षति ॥ स याति तत्परं स्थानं यतो नावर्तते पुनः ॥ ७४ ॥ प्राणैरपि त्वया राजन्रक्षितः कृपणो जनः ॥ स्वमांसान्यपि दत्तानि द्रव्येष्वन्येषु का कथा ॥ ७५ ॥ पशवोऽपि हि जीवंति केवलात्मोदरंभराः ॥ स पुनर्जीवंति श्लाघ्यो यः परार्थे हि जीवति ॥ ७६ ॥ किमत्र चित्रं यत्संतः परानुग्रहतत्पराः ॥ न हि स्वदेहशीताय जायंते चन्दनद्रुमाः ॥७७॥ परोपकारव्यापारपरो यः पुरुषः सदा ॥ स पदं तदवाप्नोति परादपि हि

यत्परम् ॥ ७८ ॥ परोपकारैकधियः स्वसुखाय गतस्पृहाः ॥ जगद्धिताय जायंते साधवस्त्वादृशा भुवि ॥ ७९ ॥ यत्ते मांसानि गात्रेभ्यः समुत्कृत्तानि पार्थिव॥ एषा ते शाश्वती कीर्तिर्लोकाननुगमिष्यति॥८०॥ दिव्यरूपधरश्चैव पालयित्वा च मेदिनीम् ॥ सर्वान् लोकानतिक्रम्य ब्रह्मलोकं गमिष्यसि ॥ ८१ ॥ रोमश उवाच ॥ एवमुक्त्वा तमिंद्राग्नी जग्मतुस्त्रिदशालयम् ॥ राजापि क्रतुमिष्ट्वा हि मुमुदे देववच्चिरम्॥८२॥ य इदं शृणुयान्नित्यं शिबेश्चरितमुत्तमम् ॥ स विधूयेह पापानि प्रयाति त्रिदिवं नरः ॥ ८३ ॥ विचिंत्य राजा स्वशरीरमध्रुवं यशश्च सर्वस्य जनस्य दुर्लभम् ॥ शरीरदानात्परिरक्षणं तथा विधाय लोकत्रयभूषणं ययौ ॥ ८४ ॥

इति श्रीमदितिहाससमुच्चये औशीनरोपाख्यानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पंचमोऽध्यायः ५ ।

वैशंपायन उवाच ॥ बृहस्पतिसमं बुद्ध्या शक्रतुल्यपराक्रमम् ॥ शरतल्पगतं भीष्ममृषयो द्रष्टुमाययुः ॥ १ ॥ अत्रिर्वशिष्ठश्च भृगुः पुलस्त्यः पुलहः क्रतुः ॥ अंगिरा गौतमोऽगस्त्यो मनुः कात्यायनस्तथा ॥ २ ॥ विश्वामित्रः स्थूलशिराः संवर्तः प्रतिमर्दनः ॥ रैभ्यो बृहस्पतिर्व्यासश्च्यवनः कश्यपो ध्रुवः ॥ ३ ॥ दुर्वासा जमदग्निश्च मार्कंडेयोऽथ गालवः ॥ उशनाथ भरद्वाजो यवक्रीतस्त्रितस्तथा ॥ ४ ॥ स्थूलाक्षः प्रकटाक्षश्च कण्वो मेधातिथिस्तथा ॥ नारदः पर्वतश्चैव वसुधन्वा तथा द्विजः ॥ ५ ॥ मित्रभूश्च्यवनो धौम्यः शतानंदोऽकृतव्रणः ॥ जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः ॥ ६ ॥ तान्प्रणम्य यथान्यायं धर्मपुत्रः सहानुजः ॥ पूजयामास विधिवज्जगत्पूज्यान्सुतेजसः ॥ ७ ॥ ते पूजिता महात्मानः सुखासीनास्तपोधनाः ॥ भीष्माश्रिताः

कथाश्चक्रुर्दिव्या धर्मांश्रितास्तथा ॥ ८ ॥ कथांते तु ततस्तेषामृषीणां भावितात्मनाम् ॥ प्रणम्य शिरसा भीष्मं पप्रच्छेदं युधिष्ठिरः ॥ ९ ॥ युधिष्ठिर उवाच ॥ के देशाः के जनपदाः का नद्यः के च पर्वताः ॥ सेव्या धर्मार्थिभिर्नित्यं तन्मे ब्रूहि पितामह ॥ १० ॥ भीष्म उवाच ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ शिलोञ्छवृत्तेः संवादं सिद्धस्य च महात्मनः ॥११॥ कश्चित्सिद्धः परिक्रम्य समस्तां पृथिवीमिमाम् ॥ उंछवृत्तेर्गृहस्थस्य गृहं प्राप्तो महात्मनः ॥ १२ ॥ स तु सम्यक्कृतातिथ्यं सुखासीनं गतज्वरम् ॥ पृष्टवानिममेवार्थं यन्मां त्वं परिपृच्छसि ॥ १३ ॥ शिलोंछवृत्तिरुवाच ॥ के देशाः सुमहापुण्याः के शैलाः के तथाश्रमाः ॥ पुण्याः पुण्योदकाश्चैव ज्ञेया नद्यस्तदुच्यताम् ॥ १४ ॥ सिद्ध उवाच ॥ ते देशास्ते जनपदास्ते शैलास्तेऽपि चाश्रमाः ॥ पुण्यास्त्रिपथगा येषां मध्ये याति सरिद्वरा ॥ १५ ॥ तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ॥ गतिं यां लभते जंतुर्गंगां संसेव्य तां लभेत् ॥ १६ ॥ स्नातानां शुचिभिस्तोयैर्गांगेयैर्नियतात्मनाम् ॥ तुष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ १७ ॥ अपहृत्य तमस्तीव्रं यथा भात्युदये रविः ॥ तथापहृत्य पापानि भाति गंगाजलाप्लुतः ॥१८॥ अग्निं प्राप्य यथा क्षिप्रं तूलराशिर्विनश्यति ॥ गंगावगाहनाच्चैव सर्वपापं प्रणश्यति ॥१९॥ यस्तु सूर्यांशुसंतप्तं गांगेयं सलिलं पिबेत् ॥ स योनिशतनिर्मुक्तो विष्णोर्लोके वसेच्चिरम् ॥ २० ॥ चान्द्रायणसहस्रं तु यश्चरेत्कायशोधनम् ॥ पिबेद्यश्चापि गंगांभः समौ स्यातामुभौ हि वै ॥ २१ ॥ तिष्ठेद्युगसहस्रं तु एकपादेन यः पुमान् ॥ पिबेद्यथेष्टं गंगांभो यो नरः स विशिष्यते ॥२२॥ लंबेदधःशिरो यस्तु वर्षाणामयुतं नरः ॥ मासमेकं तु गंगांभः सेवते तावुभौ समौ ॥ २३ ॥ भूतानामिह सर्वेषां दुःखाभिहतचेतसाम् ॥ गतिं समिच्छतां पुंसां नास्ति गंगासमा गतिः ॥ २४ ॥ महद्भिरशुभैर्ग्रस्ताननेकैरिह मानवान् ॥ पततो नरके घोरे

गंगा हरति सेविता ॥२५॥ ते पूज्यन्ते हि मुदिता नूनं देवैः सवासवैः ॥ ये यांति नियतात्मानो गंगां देवनिषेविताम् ॥२६॥ यथोपजीविता वेदा देवादीनां पराः स्मृताः ॥ तथैव देहिनां गंगा सर्वकामफलप्रदा ॥ २७ ॥ जाह्नवीतीरसंभूतां मृदं मूर्ध्नि बिभर्ति यः ॥ बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥ २८ ॥ सप्तापरान् सप्तपूर्वान् पितॄंस्तेभ्यश्च ये परे ॥ नरांस्तांस्तारयेद्गंगा दृष्टा स्पृष्टावगाहिता ॥२९॥ दर्शनात्स्पर्शनात्पानात्तथा गंगेति कीर्तनात् ॥ पुनात्यपुण्यान्पुरुषाञ्छतशोऽथ सहस्रशः ॥ ३० ॥ स्वपितॄंस्तर्पयेद्गंगामभिगम्य सुरांस्तथा ॥ श्रुताथ कीर्तिता ध्याता दृष्टा पीतावगाहिता ॥३१॥ य इच्छेत्सफलं जन्म जीवितं श्रुतमेव वा ॥ स वसेज्जाह्नवीतीरे तत्तोयैः स्नानमाचरेत् ॥ गंगा तारयते नृणामुभौ वंशौ विशेषतः ॥ ३२ ॥ जात्यंधैरिह तुल्यास्ते तथा पंगुभिरेव वा ॥ समर्था ये न पश्यंति गंगां पुण्यजलां शुभाम् ॥ ३३ ॥ त्रिकालदर्शिभिर्नित्यं सेवितामृषिसत्तमैः ॥ देवैः सेन्द्रैश्च को गंगां नोपसेवेत मानवः ॥ ३४ ॥ वानप्रस्थैश्च यतिभिर्गृहस्थैर्ब्रह्मवादिभिः ॥ विद्वद्भिः सेवितां गंगां पुमान्को नाम नाश्रयेत् ॥ ३५ ॥ मनोवाक्कायजैर्ग्रस्तः पापैर्बहुभिरावृतः ॥ वीक्ष्य गंगां भवेत्पूतः पुरुषो नात्र संशयः ॥ ३६ ॥ उत्क्रामद्भिश्च यः प्राणैर्म्रियते श्रद्धयान्वितः ॥ चिंतयेन्मनसा गंगां सोऽपि गच्छेत्परां गतिम् ॥ ३७ ॥ यावदस्थि मनुष्याणां गंगातोयेषु तिष्ठति ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ३८ ॥ पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ॥ पश्चाद्गंगां निषेवंते तेऽपि यांति परां गतिम् ॥ ३९ ॥ गंगाजलोर्मिभिर्धौतः पुरुषः पावनः स्मृतः ॥ न स्पृशेत्तस्य पापानि सद्य एवापमार्जति ॥ ४० ॥ गंगां च सुमहापुण्यां पतंतीं यां महेश्वरः ॥ दधार शिरसा देवीं तां गंगां को नु संश्रयेत् ॥ ४१ ॥ त्रिषु लोकेषु पुण्यत्वाद्गंगायाः प्रथितं

---

१ अशुभानीति शेषः । २ अत्र वाक्यद्वयम् ।

यशः ॥ या पुत्रान्सगरस्यैतान् भस्मीभूतान्नयद्दिवम् ॥ ४२ ॥ अंधाः क्लीबा जडा व्यंगाः पतिता रोगिणोऽत्यजाः ॥ गंगां संसेव्य पुरुषाः सुरैर्गच्छंति तुल्यताम् ॥ ४३ ॥ समाराध्य स्वतपसा गंगां देवीं भगीरथः ॥ पूर्वजानुग्रहार्थाय आनयद्देवलोकतः ॥ देवेभ्यः कष्टतो लब्धां को न स्पर्शयते हि ताम् ॥ ४४ ॥ आनीयमाना रुद्रेण ग्रस्ताभूत्तेजसा पुरा ॥ तस्माद्भगीरथः क्लेशैर्लेभे नियमतः शुचिः ॥ ४५ ॥ पुनर्जह्नुसकाशाच्च पुण्यां भागीरथीं किल ॥ यानीता तपसा सा हि कथं गंगां न सेव्यते ॥ ४६ ॥ पापात्पुनाति कामं तु नरं पापविनिश्चयम् ॥ तां पुण्यां सरितां श्रेष्ठां को न सेवेत कामदाम् ॥ ४७ ॥ आराध्य तां वै तपसोग्रजेन भगीरथः पूर्वजानुग्रहार्थम् ॥ गंगां देवीमानयद्देवलोकात्कस्तां नरो नाश्रयेत्सिद्धिकामः ॥ ४८ ॥ शिवां सिद्धां धर्ममूलां स्रवंतीं दक्षां ख्यातां बृहतीं विश्वरूपाम् ॥ हितामभृतां सुरसां सुप्रसन्नां विभास्वतीं सर्वभूतप्रतिष्ठाम् ॥ ४९ ॥ गंगां गता ये त्रिदिवं गतास्ते ऋषिष्टुतां विष्णुपदीं पुराणाम् ॥ सुपुण्यतोयाममृतं त्रिमार्गगां सर्वात्मना जाह्नवीं ये प्रपन्नाः ॥ ५० ॥ तत्तोयस्नानतः शुद्धगात्राः प्रयांति ते वै ब्रह्मणो धाम रम्यम् ॥ ५१ ॥ रहस्यगात्रसंपर्कात्पवित्रत्वमुपागताम् ॥ को नाम नाश्रयेद्गंगामशेषदुरितापहाम् ॥ ५२ ॥ गंगायां मरणं चैव दृढा भक्तिस्तु केशवे ॥ ब्रह्मविद्याप्रबोधश्च नाल्पस्य तपसः फलम् ॥ ५३ ॥ कांक्षंति पितरः पुंसां पूर्वेषां द्विजपुंगव ॥ मद्वंशजस्तु धर्मात्मा कदा गंगां गमिष्यति ॥ ५४ ॥ गंगोदकैर्यदा मर्त्यः स्वपितृंस्तर्पयिष्यति ॥ तदा तज्जन्मसाफल्यं स धन्यः पुरुषोत्तमम् ॥ ५५ ॥ सुदूरस्थोऽपि यो ब्रूयात्त्रिसंध्यं नियतः शुचिः ॥ गंगा गंगेति गंगेति सोऽपि गच्छेत्परां गतिम् ॥ ५६ ॥ मरणे स्मरणं विष्णोः कथ्यतेऽत्यंतदुर्लभम् ॥ तदल्पेनैव कालेन गंगां संसेव्य लभ्यते ॥ ५७ ॥ गुणानामेकदेशोऽ-

---

१ अडभाव आर्षः ।

यं गंगायाः कथितो मया । समस्तानिह तान्वक्तुं शक्तो वक्त्रशतैरपि ॥ ५८ ॥ यथार्णवोत्थरत्नानि मेरोश्च कनकोपलाः ॥ प्रसंख्यातुं न शक्यन्ते भागीरथ्यास्तथा गुणाः ॥ ५९ ॥ भीष्म उवाच ॥ इति परममतिर्गुणाननेकाञ्छिलोञ्छवृत्तिस्त्रिदशापगानुरूपान् ॥ बहुविधमभिधायतत्वरूपान् गगनतलं द्युतिमान् विवेश सिद्धः ॥ ६० ॥ शिलोंछवृत्तिः शुद्धात्मा एवं संबोधितस्तदा ॥ गंगामुपास्य विधिवत्सिद्धिं प्राप सुदुर्लभाम् ॥ ६१ ॥ तस्मात्वमपि राजेंद्र श्रद्धया परयान्वितः ॥ गंगामेव निषेवस्व ततः सिद्धिमवाप्स्यसि ॥ ६२ ॥ इतिहासमिमं पुण्यं गंगामाहात्म्यमुत्तमम् ॥ यः पठेच्छृणुयाद्वापि स गच्छेत्परमां गतिम् ॥ ६३ ॥

इति श्रीमदितिहाससमुच्चये गंगामाहात्म्योपाख्यानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ६ ।

जनमेजय उवाच ॥ पितामहस्य मे यज्ञे धर्मराजस्य धीमतः ॥ यदाश्चर्यमभूत्किञ्चित्तन्मे ब्रूहि तपोधन ॥ १ ॥ वैशंपायन उवाच ॥ शृणु तत्र महायज्ञे यदाश्चर्यमभून्महत् ॥ तर्पितेषु द्विजाग्र्येषु दीनांधकृपणेषु च ॥ २ ॥ घुष्यमाणे महानादे दिक्षु सर्वासु मानवैः ॥ पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्द्धनि ॥ ३ ॥ बिलान्निःसृत्य नकुलः कांचनार्द्धतनुर्महान् ॥ दृष्ट्वा वाचमुवाचेमां मानुषीं सुमहास्वनः ॥ ४ ॥ नकुल उवाच ॥ सक्तुप्रस्थेन वो नायं यज्ञस्तुल्योऽस्ति चानघ ॥ उञ्छवृत्तेर्द्विजाग्रस्य कुरुक्षेत्रनिवासिनः ॥ ५ ॥ तस्य तद्वचनं श्रुत्वा विस्मितास्ते द्विजोत्तमाः ॥ समुत्थायाहृताः सर्वे तमपृच्छन्कुतूहलात् ॥ ६ ॥ ब्राह्मणा ऊचुः ॥ कस्त्वमत्यद्भुताकारः कुतो वेहागतो भवान् ॥ किमर्थं वा महायज्ञमिमं राज्ञो विगर्हसे ॥ ७ ॥ नकुल उवाच ॥ नैतन्मर्षान्[1]मया प्रोक्तं न द्वेषान्न च मत्सरात् ॥ यथैव यत्पुरावृत्तं तत्सर्वं

[1] अमर्षादित्यर्थः ।

शृणुत द्विजाः ॥८॥ उंछवृत्तिर्द्विजः कश्चित् कुरुक्षेत्रेऽवसत्पुरा ॥ षष्ठान्नकालिको नित्यं सभार्यः ससुतस्नुषः ॥९॥ तस्याथ वसतस्तत्र दुर्भिक्षमभवन्महत् ॥ कृच्छ्रप्राणो ह्यभूत्तत्र सर्वलोकः क्षुधान्वितः ॥ १० ॥ स तदा क्लिश्यमानस्तु सकुटुंबो महातपाः ॥ काले काले तु संप्राप्ते नाशनं किं विहाय सः ॥ ११ ॥ कदाचिदथ कृच्छ्रेण यवप्रस्थमुपार्जयत् ॥ कृत्वा सक्तूंश्च विधिवच्चतुर्धा व्यभजत्तदा ॥१२॥ तदा क्षुत्क्षामदेहानां तेषां तत्र बुभुक्षताम् ॥ तन्मात्रगृहसाराणामतिथिः कश्चिदाययौ ॥ १३ ॥ तं पूजयित्वा विधिवत्स विप्रः प्रीतमानसः ॥ प्रोवाच मधुरं वाक्यं मनःप्रह्लादकारकम् ॥ १४ ॥ ब्राह्मण उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यन्नश्चिन्तयतां भवान् ॥ संप्राप्तोऽतिथिवेलायां धर्मात्तस्यैव तोषदः ॥१५॥ स्वागतं ते मुनिश्रेष्ठ भूयः सुस्वागतं तु ते ॥ सनाथः क्रियतां ब्रह्मन्नुटजोऽयं प्रविश्यताम् ॥ १६ ॥ ते गृहा गृहिणां सत्या येषु मार्गश्रमातुराः ॥ स्वगृहेष्विव विश्वस्ता विश्राम्यंति भवादृशाः ॥१७ ॥ अहोऽतीव सभाग्यास्ते निःस्वापि गृहमेधिनः ॥ येषामशून्यदिवसा गच्छंत्यतिथिपूजने ॥ १८ ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ॥ एतानि च सतां गेहे नोच्छिद्यंते कदाचन ॥ १९ ॥ नकुल उवाच ॥ एवमुक्त्वा स धर्मात्मा तमभ्यर्च्य यथाविधि ॥ स्वभागं प्रददौ हृष्टो न चातृप्यद्धि तेन सः ॥ २० ॥ ततोऽस्य भार्या क्षुत्क्षामा वृद्धा म्लाना तपस्विनी ॥ त्वगस्थिभूता वेपंती भर्तारमिदमब्रवीत् ॥ २१ ॥ ब्राह्मण्युवाच ॥ किं विवक्षसि धर्मज्ञ विद्यमानेषु सक्तुषु ॥ तुष्ट्यर्थमतिथेरस्य मद्भागो विप्र दीयताम् ॥ २२ ॥ ब्राह्मण उवाच ॥ अपि कीटपतंगानां मृगादीनां च शोभने ॥ स्त्रियो रक्ष्याश्च पोष्याश्च तन्नैवं कर्तुमर्हसि ॥ २३ ॥ धर्मार्थकामकार्याणि शुश्रूषा कुलनंदिनि ॥ दारेष्व-

---

१ संधिरार्षः ।

धीनः स्वर्गश्च पितॄणामात्मनस्तथा ॥ २४ ॥ ब्राह्मण्युवाच ॥ सहधर्मचरौ धात्रा सृष्टौ भार्यापती द्विज ॥ तस्मान्महति धर्मे मां मा बाह्यां कर्तुमर्हसि ॥ २५ ॥ पतिर्भार्यापरो धर्मः पतिरेव हि दैवतम् ॥ पतिरेव परो बंधुः पतिरेव परा गतिः ॥२६॥ धर्ममर्थं च कामं च यशः स्वर्गतिमेव च ॥ पत्यौ प्रसन्ने स्त्री सर्वमेतत्प्राप्नोत्यसंशयम् ॥ २७ ॥ कर्मणा मनसा वाचा या स्त्री पतिमनुव्रता ॥ इहैव च महाभागा सा देवैरपि पूज्यते ॥ २८ ॥ न मया भुज्यते किंचित् त्वय्यभुक्ते कदाचन ॥ व्रतमेतद्विदित्वा मे त्वं सक्तून् दातुमर्हसि ॥ २९ ॥ नकुल उवाच ॥ एवं श्रुत्वा गृहीत्वा तान् सक्तून् सोऽतिथये ददौ ॥ भक्षयित्वातिथिस्तांश्च नैव तृप्तोऽभवत्तदा ॥ ३० ॥ ततः पुत्रो विनीतात्मा पितरं प्राह धर्मवित् ॥ पुत्र उवाच ॥ तृप्त्यर्थमतिथेरस्य मद्भागोऽपि प्रदीयताम् ॥३१ ॥ किं तस्य जीवितफलं प्राप्तो यस्याशयातिथिः ॥ शून्यादिव गृहाद्दीनो निराशः प्रतिगच्छति ॥३२॥ कुटुंबं पीडयित्वापि त्यक्त्वा लोभं विमत्सरः ॥ ददाति योऽतिथेरन्नं स प्राप्नोति परां गतिम् ॥३३॥ पितोवाच ॥ अपि वर्षशतायुस्त्वं बाल एव मतो मम ॥ बालानां क्षुद्बलिष्ठा च तस्मात्त्वं भुंक्ष्व पुत्रक ॥ ३४ ॥ पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी ॥ त्वया तु जीवता वत्स लोकाः स्युर्विधृता मम ॥ ३५ ॥ तपो मे सुमहत्तप्तं हुता विधिवदग्नयः ॥ संततिस्त्वं च मे पुत्र नाहं मृत्योर्बिभेम्यतः ॥ ३६ ॥ प्रायशः पापकारित्वान्मृत्योरुद्विजते जनः ॥ कृतकृत्याः प्रतीक्षंते मृत्युं प्रियमिवातिथिम् ॥ ३७ ॥ पुत्र उवाच ॥ पिता गुरुः पिता देवः पिता धर्मः सनातनः॥ पितरि प्रीतिमापन्ने प्रीताः स्युः सर्वदेवताः ॥ ३८ ॥ शरीरं संपदो दाराः श्रुतं लोकाः सनातनाः ॥ यस्य प्रसादात्प्राप्यंते कोऽन्यः पूज्यतमस्ततः ॥ ३९ ॥ पूर्वं वयसि पुष्णाति पिता पुत्रमिति श्रुतिः ॥ उत्तरे पितरं पुत्रः तस्मात्सक्तून्प्रयच्छ मे ॥ ४० ॥ नकुल उवाच ॥ इत्युक्तः स गृहीत्वा तु संपूज्या-

तिथये ददौ ॥ भुक्त्वा तानपि सर्वांस्तु नैव तृप्तिमवाप्तवान् ॥ ४१ ॥ ततः प्रीता स्नुषा प्राह श्वशुरं विनयान्विता ॥ मद्भागोऽपि महाभाग द्विजस्यास्य प्रदीयताम् ॥ ४२ ॥ श्वशुर उवाच ॥ बाला योषित्स्नुषा साध्वी नियमव्रतकर्शिता ॥ कुले संततिहेतुश्च रक्षा त्वं सर्वथैव मे ॥ ४३ ॥ गुरुशुश्रूषया श्रांतां क्षुत्क्षामां तपसि स्थिताम् ॥ त्वां दृष्ट्वा म्लानवदनां पीड्यते च मनो मम ॥ ४४ ॥ भृत्यानामुपरोधेन यो धर्मः क्रियते शुभे ॥ न तं संतः प्रशंसंति नृशंसजनसेवितम् ॥ ४५ ॥ स्नुषोवाच ॥ भृत्या यत्रावरुध्यंते तत्रायं विहितो विधिः ॥ मन्यतेऽनुग्रहो यत्र तत्र दोषो न कश्चन ॥ ४६ ॥ मम त्वं स्वामिनः स्वामी देवतायाश्च दैवतम् ॥ गुरोर्गुरुर्गरीयांश्च नैवं त्वं वक्तुमर्हसि ॥ ४७ ॥ अनुकंप्येति संचिंत्य दृढभक्तेति वा पुनः ॥ प्रयच्छ भगवन् सक्तून् दीनामनुगृहाण माम् ॥ ४८ ॥ नकुल उवाच ॥ ततस्तानपि सक्तून्स गृहीत्वातिथये ददौ ॥ बुभुजे चातिथिः सर्वान्न त्वसौ बुभुजे द्विजः ॥ ४९ ॥ अनुग्रहं मन्यमानः सकुटुंबो महातपाः ॥ धर्मवर्त्मनि युक्तात्मा न चचालाचलोपमः ॥ तं शुद्धभावमाज्ञाय प्रीतः प्रोवाच सोऽतिथिः ॥ ५० ॥ अतिथिरुवाच ॥ धर्मोऽहं द्विजरूपेण त्वां जिज्ञासुरिहागतः ॥ दमस्तपो दया दानमित्येतास्तनवो मम ॥ ५१ ॥ यो वै नित्यमनायासैर्भक्त्या मां भजते नरः ॥ तस्मै भक्तिमतस्तुष्टो गतिमिष्टां ददाम्यहम् ॥ ५२ ॥ यस्माच्च शुद्धभावेन दत्तं कष्टार्जितं त्वया ॥ कृच्छ्रप्राप्तेन सर्वस्वं तस्मात्स्वर्गमितो व्रज ॥ ५३ ॥ स्वर्गस्थास्त्रिदशाः सर्वे दिव्या ब्रह्मर्षयस्तथा ॥ स्तुवंति दानमेतत्ते विस्मयाविष्टचेतसः ॥ ५४ ॥ सक्तुप्रस्थपरित्यागाच्छुद्धेनाग्रिमजन्मना ॥ यशोमहाजलौघेन लोकाः संप्लावितास्त्वया ॥ ५५ ॥ सफलं भवतो जन्म ब्राह्मण्यं सफलं च ते ॥ गगनात्पुष्पवृष्टिश्च पतिता तव मूर्धनि ॥ ५६ ॥ तेजः प्रज्ञां बलं धैर्यं क्षुन्नाशयति देहिनाम् ॥ यो दुर्जयो तां जयति तेन

स्वर्गो जितो भवेत् ॥ ५७ ॥ भार्या पुत्रः स्नुषा साध्वी तथैवात्मा सुदुस्त्यजः ॥ सर्वाण्येतानि धर्मार्थे त्यक्तानि तृणवत्त्वया ॥ ५८ ॥ न तथा प्रीयते धर्मो दानैर्दत्तैर्महाधनैः ॥ न्यायलब्धैर्यथात्यल्पैः श्रद्धा-दत्तः स तुष्यति ॥ ५९ ॥ अश्रद्धा परमं पापं श्रद्धा पापप्रणाशिनी ॥ जहाति पापं श्रद्धा वा जीर्णां त्वचमिवोरगः ॥६०॥ बह्वप्यश्रद्धया दत्तं नष्टमाहुर्मनीषिणः ॥ वार्यपि श्रद्धया दत्तमनंतायोपकल्पते ॥ ६१ ॥ रंतिदेवस्तु धर्मात्मा पुरा निष्किंचनोऽभवत् ॥ श्रद्धायुक्तो स दत्त्वापो नाकपृष्ठमितो गतः ॥ ६२ ॥ आत्ममांसप्रदानेन शिबिरौशीनर-स्तथा ॥ सर्वदुःखविनिर्मुक्तो मुमुदे देववच्चिरम् ॥ ६३ ॥ न राजसूया विचिता नाश्वमेधशतान्यपि ॥ सक्तुप्रस्थप्रदानस्य तुल्यान्येतानि यान्ति च ॥६४॥ पश्य दिव्यं विमानं ते स्वर्गात्प्राप्तमिदं द्विज ॥ दिव्यं विमानमारुह्य सकुटुंबो दिवं व्रज ॥ ६५ ॥ नकुल उवाच ॥ इत्युक्तं परितुष्टेन साक्षाद्धर्मेण स द्विजः ॥ दिव्यं विमानमारुह्य सकुटुंबो दिवं ययौ ॥६६॥ ततोऽहं तेषु यातेषु बिलान्निःसृत्य सत्वरः ॥ दिव्यपुष्प-समाकीर्णे सक्तुतोये व्यचेष्टितम् ॥६७॥ अथ धर्मप्रसादान्मे मुनेस्तस्य च तेजसा ॥ दिव्यपुष्पावमर्दाच्च हैमं पार्श्वमजायत ॥ ६८ ॥ द्वितीयं तु कथं पार्श्वं हैमं स्यादिति चिंतयन् ॥ तपोवनानि तीर्थानि यज्ञां-श्चाप्यगमं तथा ॥ ६९ ॥ ततो यज्ञमिमं श्रुत्वा धर्मराजस्य धीमतः ॥ आशया परया प्राप्तो न च कांचनतां गतः ॥ ७० ॥ ततः समक्षं भवतां वाक्यमुक्तमिदं नृप ॥ सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यस्तवा-नघ ॥ ७१ ॥ वैशंपायन उवाच ॥ इत्येवं कथयित्वा तु द्विजानां नकुलस्तथा ॥ ययौ यथागतं राजन् तेऽपि विप्रा गृहान्ययुः ॥ ७२ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ अश्वमेधे महायज्ञे महा-श्चर्यमभूत्तदा ॥ ७३ ॥ तस्मान्न विस्मयः कार्यः त्वया यज्ञेषु पार्थिव ॥ विनैव यज्ञैर्मुनयस्तपोभिस्त्रिदिवं गताः ॥ ७४ ॥ अद्रोहः

सर्वभूतेषु सन्तोषः सत्यमार्जवम् ॥ सर्वेन्द्रियजयः क्षांतिस्तपश्च स्वर्गसाधनम् ॥ ७५ ॥ स्वमेव दुःखार्जितमल्पमुद्गलो ददाति राजन् ददतो महाफलम् ॥ विहाय सक्तून् स्वकुटुंबनिःस्पृहो जगाम सर्वैस्त्रिदिवं स तु द्विजः ॥ ७६ ॥

इति श्रीमदितिहाससमुच्चये मौद्गल्योपाख्यानं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ७।

युधिष्ठिर उवाच ॥ कीदृशैः कर्मभिर्बद्धा गच्छंति नरकं नराः ॥ स्वर्गं वै कीदृशैस्तात तन्मे त्वं वक्तुमर्हसि ॥ १ ॥ भीष्म उवाच ॥ ब्राह्मण्यं पुण्यमुत्सृज्य ये द्विजा लोभमोहिताः ॥ कुकर्मणोपजीवंति ते वै नरकगामिनः ॥ २ ॥ ब्राह्मणेभ्यः प्रतिश्रुत्य न प्रयच्छंति ये धनम् ॥ ब्रह्मस्वानां च हर्तारो नरा निरयगामिनः ॥ ३ ॥ आगतान् भोजनार्थाय ब्राह्मणान् वृत्तिकर्शितान् ॥ परीक्षां ये च कुर्वंति ते वै निरयगामिनः ॥ ४ ॥ पुरुषाः पिशुनाश्चैव मानिनोऽनृतवादिनः ॥ अतिबद्धप्रलापाश्च नरा नरकगामिनः ॥ ५ ॥ ये परस्वापहर्त्तारः परस्वानां च सूचकाः ॥ परश्रियाभितप्यंते नरा नरकगामिनः ॥ ६ ॥ प्राणिनां प्राणिहिंसायां ये नरा निरताः सदा ॥ प्रवर्ज्यावसिता ये च नरा निरयगामिनः ॥ ७ ॥ कूपानां च तडागानां विप्राणां च परंतप ॥ रथ्यानां च प्रभेत्तारो नरा निरयगामिनः ॥ ८ ॥ विभजंति च ये सर्वाञ्छिशून् भृत्यातिथींस्तथा ॥ उच्छिन्नपितृदेवार्च्यास्ते वै नरकगामिनः ॥ ९ ॥ व्रतीनां दूषका राजन् यतीनां दूषकास्तथा ॥ वेदानां दूषकाश्चैव नरा नरकगामिनः ॥ १० ॥ आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् ॥ न चिंतयति ये विष्णुं ते वै नरकगामिनः ॥ ११ ॥ ब्राह्मणानां गवां चैव कन्यानां सुहृदांस्तथा ॥ ये वैरं

यांति कार्येषु ते वै नरकगामिनः ॥ १२ ॥ काष्ठैर्वा शंकुभिर्वापि कंटकैरुपलैस्तथा ॥ पंथानमुपरुंधंति ते वै नरकगामिनः ॥ १३ ॥ सर्वभूतेष्वविश्वस्ताः सर्वभूतेषु निर्दयाः ॥ सर्वभूतेषु जिह्माश्च नरा निरयगामिनः ॥ १४ ॥ क्षेत्रवृत्तिं गृहच्छेदं प्रीतिच्छेदं च ये नराः ॥ आशाच्छेदं च कुर्वंति ते वै नरकगामिनः ॥ १५ ॥ आशया समनुप्राप्तान् क्षुत्तृष्णाश्रमकर्शितान् ॥ येऽतिथीनवमन्यंते नरा नरकगामिनः ॥ १६ ॥ मद्यपानरता नित्यं गीतवाद्यरतास्तथा ॥ द्यूतस्तेयरताश्चैव नरा नरकगामिनः ॥ १७ ॥ रागांधास्तु नरा नारीं भुंजंते च रजस्वलाम् ॥ पर्वस्वपि दिवा चैव नरा नरकगामिनः ॥ १८ ॥ अनन्यशरणां भार्यामृतुकालव्यतिक्रमाम् ॥ ये च कुर्वंति विद्वेषात् ते वै नरकगामिनः ॥ १९ ॥ अयोनौ च वियोनौ च पशुयोनौ च भारत ॥ ये क्षिपंति नराः शुक्रं ते वै नरकगामिनः ॥ २० ॥ स्त्रीधनेनोपजीवंति ये नराः स्त्रीजितास्तथा ॥ स्त्रियं चैव न रक्षंति ते वै नरकगामिनः ॥ २१ ॥ शस्त्राणां चैव कर्तारः शल्यानां धनुषस्तथा ॥ विक्रेतारश्च राजेंद्र ते वै नरकगामिनः ॥ २२ ॥ अनाथं विकलं दीनं रोगार्तं बालमेव च ॥ नानुकंपंति ये मूढास्ते वै नरकगामिनः॥ २३॥ न्यासापहारिणं लुब्धं नास्तिकं लोकदंभकम् ॥ नृशंसं पिशुनं जिह्मं परदाराभिमर्शिनम् ॥२४॥ विश्वासघातकं क्षुद्रं कृतघ्नं पापनिर्भयम् ॥ ईदृशं पुरुषं दृष्ट्वा नरकोऽपि जुगुप्सते ॥ २५ ॥ इत्येते कथिता राजन्नरा नरकगामिनः ॥ भागिनः स्वर्गलोकस्य प्रोक्ता ये तान्निबोध मे ॥ २६ ॥ सत्येन तपसा क्षांत्या दानेनाध्ययनेन च ॥ ये धर्ममनुवर्तंते ते नराः स्वर्गगामिनः ॥ २७ ॥ ये च होमजपस्नानदेवतार्चनतत्पराः ॥ श्रद्दधाना महात्मानस्ते नराः स्वर्गगामिनः ॥ २८ ॥ मातापित्रोश्च शुश्रूषां ये कुर्वंत्यादृता नराः ॥ वर्जयंति दिवास्वापं ते नराः स्वर्गगामिनः ॥ २९ ॥ सर्वहिंसानिवृत्ताश्च नित्यं सर्वसहाश्च ये ॥ सर्व-

स्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ३० ॥ शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत ॥ ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ॥३१॥ भीतान्पापात्तथा शोकाद्दारिद्र्यव्याधिकर्शितान् ॥ विमोचयंति ये जंतूँस्ते नराः स्वर्गगामिनः ॥ ३२ ॥ सहस्रपरिवेष्टारस्तथैव च सहस्रशः ॥ त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥ ३३ ॥ आढ्याश्च रूपवंतश्च यौवनस्थाश्च भारत ॥ ये वै जितेंद्रिया धीराः पुरुषाः स्वर्गगामिनः ॥ ३४॥ ये याचिताः प्रहृष्यंति प्रियं दत्त्वा वदंति च ॥ त्यक्तदानफलेच्छाश्च ते नराः स्वर्गगामिनः ॥ ३५ ॥ निवेशनानां धान्यानां रसानां च परंतप ॥ स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥ ३६ ॥ द्विषतामपि जंतूनां न द्विषंति कदाचन ॥ कीर्तयंति नराश्चैव ते नराः स्वर्गगामिनः ॥ ३७ ॥ प्रवृत्तौ च निवृत्तौ च वेदशास्त्रोक्तवर्त्मं च ॥ आचरंति महात्मानस्ते नराः स्वर्गगामिनः ॥ ३८ ॥ ये परेषां श्रियं दृष्ट्वा न तपंति विमत्सराः ॥ प्रहृष्टाश्चाभिनंदति ते नराः स्वर्गगामिनः ॥ ३९ ॥ वापीकूपतडागानां प्रपाणां देवसद्मनाम् ॥ आरामाणां च कर्तारस्ते नराः स्वर्गगामिनः ॥ ४० ॥ असत्येष्वपि सत्याश्च ऋजवोऽनार्जवेष्वपि ॥ अरिष्टेऽपि हितेच्छाश्च ते नराः स्वर्गगामिनः ॥ ४१ ॥ यस्मिन्कुले नरा जाता बहुच्छत्राः शतायुषः ॥ सानुक्रोशाः सदाचारास्ते नराः स्वर्गगामिनः ॥ ४२ ॥ अरण्ये विजने दृष्ट्वा परस्वमकुतोभयम् ॥ मनसापि न सेवंते ते नराः स्वर्गगामिनः ॥ ४३ ॥ अवंध्यं दिवसं कुर्युर्धर्मेणैकेन सर्वदा ॥ व्रतं गृह्णंति ये नित्यं ते नराः स्वर्गगामिनः ॥ ४४ ॥ परैः परिगृहीतं तु तृणमप्यटवीगतम् ॥ मनसापि न गृह्णंति ते नराः स्वर्गगामिनः ॥ ४५ ॥ आक्रोशंतं स्तुवंतं वा तुल्यं पश्यंति ये नराः ॥ शांतात्मानो जितात्मानस्ते नराः स्वर्गगामिनः ॥ ४६ ॥ तारुण्येन परान् दारान् क्षमयन्ति गृहागतान् ॥ न कामयंति सत्वस्थास्ते नराः

स्वर्गगामिनः ॥ ४७॥ आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ॥ मातृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ ४८ ॥ गंगायां पुष्करे तीर्थे गयायां च विशेषतः ॥ पितृपिंडप्रदातारस्ते नराः स्वर्गगामिनः ॥ ४९ ॥ मनसश्चेंद्रियाणां च नित्यं संयमने रताः ॥ त्यक्तलोभभयक्रोधास्ते नराः स्वर्गगामिनः ॥ ५० ॥ ये दस्युभयसंत्रस्तान्ब्राह्मणान् गाः स्त्रियस्तथा ॥ स्वार्थवत्परिरक्षंति ते नराः स्वर्गगामिनः ॥ ५१ ॥ तीर्थानि च यथोक्तेन विधिना संविशंति ये ॥ सर्वद्वंद्वसहा दांतास्ते नराः स्वर्गगामिनः ॥ ५२ ॥ यूकामत्कुणदंशादीन् ये जंतून् खादतस्तनुम् ॥ पुत्रवत्परिरक्षंति ते नराः स्वर्गगामिनः ॥ ५३ ॥ तीर्थसेवारता दांताः साधुसेवारतास्तथा ॥ सर्वद्वंद्वसहा धीरास्ते नराः स्वर्गगामिनः ॥५४॥ अर्थान्नूनं यथोक्तेन विधिना संचयंति च ॥ ये दांताः परदारांश्च कर्मणा मनसा गिरा ॥ रमयंति न सत्वस्थास्ते नराः स्वर्गगामिनः ॥५५॥ निषिद्धानि न कुर्वंति विहितानि च कुर्वते ॥ आत्मशक्तिं च विज्ञाय ते नराः स्वर्गगामिनः ॥५६॥ एतत्ते कथितं सर्वं मया तत्वेन पार्थिव ॥ दुर्गतिः सुगतिश्चैव प्राप्यते कर्मभिर्यथा ॥ ५७ ॥ नरः परेषां प्रतिकूलमाचरन् प्रयाति घोरं नरकं सुदुःसहम् ॥ सहानुकूलस्य नरस्य जीवतः सुखावहा मुक्तिरदूरतः स्थिता ॥ ५८ ॥

इति श्रीमदितिहाससमुच्चये स्वर्गनरकोपाख्यानं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ८ ।

युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्वशास्त्रविशारद ॥ शरणं पालयांनस्य[1] यो धर्मस्तं वदस्व मे ॥ १ ॥ भीष्म उवाच ॥ महाधर्मोऽक्षयफलः शरणागतपालने ॥ धर्मनिश्चयतत्वज्ञा एवमाहुर्म-

१ पालयमानस्य ।

नीषिणः ॥ २ ॥ शिबिप्रभृतयो राजन्राजानः शरणागतान् ॥ परिपाल्य महात्मानः संसिद्धिं परमां गताः ॥३॥ श्रूयते हि कपोतेन शत्रुः शरणमागतः ॥ स्वमांसैः पूजितः काष्ठैः स पक्षी प्राप्तवान्गतिम् ॥ ४ ॥ शृणु राजन्कथामेतां सर्वपापप्रणाशिनीम् ॥ नृपतिर्मुचुकुंदस्य कथिता भार्गवेण या ॥ ५ ॥ कश्चित्क्षुद्रसमाचारः प्राणिनां कालसंमतः ॥ विचचार महारण्ये घोरः शकुनिलुब्धकः ॥६॥ काककोकिलकृष्णांगो रूक्षवाचा समन्वितः॥ यवमध्यः कृशग्रीवो ह्रस्वपादो महोदरः ॥७॥ नैवं तस्य सुहृत्कश्चिन्न संबंधी न बांधवः॥ जनैः सर्वैः परित्यक्तस्तेनं रौद्रेण कर्मणा ॥८॥ स वै जालकमादाय वने हत्वा च पक्षिणः॥ चकार विक्रयं तेषां पतगानां नराधिप ॥ ९ ॥ एवं प्रवर्त्तमानस्य महान्कालो न बुध्यते ॥ तस्य भार्यासहायस्य शाश्वतं भ्रमतस्तदा ॥ दैवयोगविमूढस्य नान्या वृत्तिरभून्नृप ॥१०॥ ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः ॥ उद्वेजनीया भूतानां व्याला इव भवंति ते ॥ ११ ॥ ततः कदाचिदस्याथ वनस्थस्याभवत्तदा ॥ शातयन्निव वृक्षाग्रान् सुमहान्वातसंभ्रमः ॥१२॥ मेघसंकुलमाकाशं विद्युन्मंडलमंडितम् ॥ सजलं च मुहूर्तेन नौसार्थेनैव सागरः ॥ १३ ॥ वारिधारासमूहांश्च सम्प्रावर्षच्छतक्रतुः ॥ क्षणेन पूरयामास सलिलेन वसुंधराम् ॥१४॥ ततो धाराकुले काले सोऽयमासीत्तु विह्वलः ॥ शीतार्तश्च वने तस्मिन्नाकुलेनांतरात्मना ॥ उच्चं निम्नं स्थलं वापि न च वेद विहंगहा ॥१५॥ पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥ पक्षिणो वातवर्षेण भीता लिल्युस्तथापरे ॥ मृगसिंहवराहाश्च स्थलमाश्रित्य शेरते ॥ १६ ॥ महता वातवर्षेण त्रासितास्ते वनौकसः ॥ भयार्तश्च क्षुधार्तश्च स बभ्राम तदा वने ॥ १७ ॥ सोऽपश्यत्पतितां भूमौ कपोतीं शीतविह्वलाम् ॥ लुब्धकस्तु गृहीत्वा तां कपोतीं पंजरेऽक्षिपत् ॥ स्वयं दुःखाभिभूतोऽपि दुःखं यत्कुरुते

---

१ तेनेति कर्मणो विशेषणम् ।

परे ॥ १८ ॥ पापात्मा पापकारित्वात्स प्रसंगाद्विमुच्यते ॥ स तु शीतैस्तथा गात्रैर्जंगमैको वनेचरः ॥ सोऽपश्यद्वनखंडं वै नीलमेघसमप्रभम् ॥ १९ ॥ सेव्यमानं खगानीकैश्छायावासफलार्थिभिः ॥ धात्रा तु प्रचुरोत्कृष्टप्रयासैः साधुनिर्मितम् ॥ २० ॥ अथाभवत्क्षणेनैव वियद्विमलतारकम् ॥ महत्सर इवोत्फुल्लं कुमुदैश्चारुणोदयम् ॥ तारकाकुसुमाकारमाकाशं निर्मलं महत् ॥ २१ ॥ घनैर्मुक्तं तदा दृष्ट्वा लुब्धकः शीतविह्वलः ॥ दिशोऽवलोकयामास वेलां चैव दुरात्मवान् ॥ २२ ॥ दूरे ग्रामनिवासं च तस्माद्देशादिति प्रभो ॥ कृतबुद्धिर्वने तस्मिन्नध्यवसद्रजनीं ततः ॥ २३ ॥ सोंऽजलिं शिरसा कृत्वा वाक्यमाह वनस्पतिम् ॥ शरणं हि गतोऽस्म्यद्य देवतास्विह भारत ॥ २४ ॥ स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ॥ प्रसुप्तो लुब्धकस्तत्र शीतार्तश्च तथा क्षुधा ॥ २५ ॥ अथ तस्य तरोः स्कंधे कपोतः सुचिरोषितः ॥ भार्यायां चिरयातायां दुःखितः पर्यदेवयत् ॥ २६ ॥ वातवर्षो महानासीन्न वागच्छति मे प्रिया ॥ गृहे तु गृहिणी न स्याद्वनेन सदृशं गृहम् ॥ २७॥ यदि सा रक्तनेत्रांता चित्रांगी मधुरस्वरा ॥ नाद्यागच्छति मे कांता त्यक्ष्येऽहं जीवितं ततः ॥ २८॥ न भुंक्ते मय्यभुंक्ते तु नाश्नाति स्वामितत्परा ॥ तिष्ठत्युत्तिष्ठमाने च शेते च शयिते तथा ॥ २९ ॥ हृष्टे मयि सुसंहृष्टा दुःखिते मयि दुःखिता ॥ सुरुष्टे दीनवदना क्रुद्धे च प्रियवादिनी ॥ ३०॥ पतिव्रता पतिप्राणा भर्तुः प्रियहिते रता ॥ यस्य स्यात्तादृशी भार्या स धन्यः पुरुषो भुवि ॥३१॥ वृक्षमूलेऽपि दयिता यदि तिष्ठति तद्गृहम् ॥ प्रासादोऽपि तया हीनः कांतारादतिरिच्यते ॥ ३२॥ धर्मकामार्थकार्येषु भार्या पुंसः सहायिनी ॥ विदेशगमने चास्य सैव विश्वासकारिणी ॥ ३३ ॥ नास्ति विद्यासमो बंधुर्नास्ति भार्यासमः सखा ॥ नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजम् ॥३४॥ यस्य भार्या गृहे नास्ति सुप्रिया प्रियवादिनी ॥

अरण्ये तेन गंतव्यं यथारण्यं तथा गृहम् ॥ ३५ ॥ भीष्म उवाच ॥ एवं विलपतस्तस्य श्रुत्वा च करुणं बहु ॥ गृहीता शाकुनिघ्नेन कपोती वाक्यमब्रवीत् ॥ ३६ ॥ कपोत्युवाच ॥ अहोऽतीव सभाग्याहं यस्या मे दैवतः पतिः ॥ असतो वा सतो वापि गुणानेवं प्रभाषते ॥ ३७ ॥ न सा स्त्रीत्यभिभाष्येत यस्या भर्त्ता न तुष्यति ॥ तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ ३८ ॥ दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ॥ भस्मीभवतु सा नारी यस्या भर्ता न तुष्यति ॥ ३९ ॥ शृणुष्वावहितः कांत यत्ते वक्ष्याम्यहं हितम् ॥ प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ ४० ॥ एष शाकुनिकः शेते तव वासं समाश्रितः ॥ शीतार्तश्च क्षुधार्त्तश्च पूजामस्मै समाचर ॥ ४१ ॥ यो हि कश्चिद्द्विजं हन्याद्गावं वा लोकमातरम् ॥ शरणागतं तु यो हन्यात्तयोस्तुल्यं च पातकम् ॥ ४२ ॥ यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ॥ स तस्य पुण्यमादाय दुष्कृतं च प्रयच्छति ॥ ४३ ॥ सर्वात्मना गृहस्थेन संपूज्योऽतिथिरागतः ॥ स हि तस्य परो धर्म इति धर्मव्यवस्थितिः ॥ ४४ ॥ मां चास्य त्वं कृथा द्वेषं मद्बंधनसमुद्भवम् ॥ स्वकर्मणैव बद्धाहं प्राक्तनैः कर्मबंधनैः ॥ ४५ ॥ दारिद्र्यरोगदुःखानि बंधनव्यसनानि च ॥ आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ ४६ ॥ न दाता सुखदुःखानां नापहर्तास्ति कश्चन ॥ भुंजते स्वकृतान्येव तस्मात्त्वं दुःखमुत्सृज ॥ ४७ ॥ तस्मात्त्वं दुःखमुत्सृज्य मद्बंधनसमुद्भवम् ॥ धर्मं मनः समाधाय पूजयैनं यथाविधि ॥ ४८ ॥ उपकारिषु यः साधु साधुत्वे तस्य को गुणः ॥ अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४९ ॥ अपकारिष्वपि साधुः साधुत्वमनुवर्त्तते ॥ छेत्तारमपि गंधेन सुखयत्येव चंदनम् ॥ ५० ॥ भीष्म उवाच ॥ स्वपत्न्यास्तद्वचः श्रुत्वा हितं धर्मसमन्वितम् ॥ उपगम्य ततो हृष्टः कपोतः प्राह लुब्धकम् ॥ ५१ ॥ कपोत उवाच ॥ भद्रं सुस्वागतं तेऽस्तु ब्रूहि किं कर-

वाणि ते ॥ संतापश्च न कर्तव्यः स्वगृहे वर्त्तते भवान् ॥ ५२ ॥ पथि श्रांतमविज्ञातमतिथिं क्षुत्पिपासितम् ॥ यो न पूजयते भक्त्या तमाहुर्ब्रह्मघातकम् ॥५३॥ तन्मे ब्रूहि भवान् क्षिप्रं किं करोमि किमिच्छसि ॥ प्रयत्नेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥५४॥ शरणागतस्य कर्तव्यमातिथ्यमिह जानता ॥ पंचयज्ञप्रणीतेन गृहस्थेन विशेषतः ॥५५॥ पचयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ॥ तस्य नायं परो लोकस्ततो भवति शाश्वतः ॥ ५६ ॥ तद्ब्रूहि त्वं हि विस्रब्धो यन्मह्यं वक्तुमर्हसि ॥ तत्कारिष्याम्यहं सर्वं मा च शोके मनः कृथाः ॥ ५७ ॥ भीष्म उवाच ॥ तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहंगहा ॥ कपोत खलु शीतं मे तस्मात्त्राणं विधीयताम् ॥ ५८॥ स त्वंगारकमादाय चानयामास पावकम् ॥ ततः शुष्केषु पर्णेषु समदीपयत स्वयम् ॥५९॥ सुसंदीप्तं ततः कृत्वा तमाह शरणागतम् ॥ संतापयस्व विश्रब्धस्त्वं गात्राण्यकुतोभयः ॥६०॥ एवमुक्त्वा ततः पक्षी पर्णान्यास्तीर्यभूतले ॥ तेन चोक्ते तथेत्युक्त्वा व्याधो गात्राण्यतापयत् ॥ ६१ ॥ अग्निप्रत्यागतप्राणस्ततःप्राह विहंगहा ॥ लुब्धक उवाच ॥ आहारं देहि मे शीघ्रमेषा क्षुन्मां हि बाधते ॥ स तद्वचः प्रतिश्रुत्य वाक्यमाह विहंगमः॥ ६२॥ कपोत उवाच ॥ उपलभ्य हि जीवामो वयं नित्यं वनेचराः॥ न चास्ति विभवः कश्चिद्येन ते नाशये क्षुधाम् ॥ ६३॥ संचयो नास्ति चास्माकं मुनीनामिव कानने ॥ करोमि प्रत्यहं तात चंचुस्वोदरपूरणम् ॥ ६४ ॥ निःस्वस्यागाधदुःखं तदर्थितस्योपजायते ॥ यद्यर्थिनो भवेत्ताहग्जीवेदुःखतरं ततः ॥६५॥ धिङ् मां दुष्कृतकर्माणं कृपणं व्यर्थजीवितम् ॥ योऽहं विधात्रा विहितः केवलात्मोदरंभरिः ॥ ६६॥ सहस्रं भरते कश्चिच्छतमन्ये दशापरे ॥ मम त्वकृतपुण्यस्य दीनस्यात्मापि दुर्भरः ॥६७॥ पत्रपुष्पफलच्छायामूलपल्लवदारुभिः ॥ धन्या महीरुहा येषां विमुखा यांति नार्थिनः ॥ ६८ ॥ एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्नु-

यात् ॥ तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ॥ ६९ ॥ न तथा साधयाम्येतच्छरीरं व्यर्थजीवितम् ॥ यथा न भूयो वक्ष्यामि नास्तीत्यतिथिमागतम् ॥ ७० ॥ भीष्म उवाच ॥ स निवेद्यैवमात्मानं ततस्तं लुब्धकं पुनः ॥ उवाच तर्पयिष्ये त्वां स्वधर्मं परिपालयन् ॥ ७१ ॥ देवतानामृषीणां च संवादेषु पुनः पुनः ॥ श्रुतपूर्वो मया धर्मो महानतिथिपूजने ॥ ७२ ॥ स्वगृहानाशया प्राप्तः क्षुत्तृष्णाश्रमकर्शितम् ॥ पूजयेद्योऽतिथिं सम्यग्भवेत्पूतक्रतुर्हि सः ॥ ७३ ॥ एवमुक्त्वा स धर्मात्मा प्रहृष्टेनांतरात्मना ॥ तमग्निं त्रिः परिक्रम्य प्रविवेश स्ववेश्मवत् ॥ ७४ ॥ ततस्तं लुब्धको दृष्ट्वा कृपया भृशपीडितः ॥ कपोतमग्नि पतितं वाक्यमेतदभाषत ॥ ७५ ॥ लुब्धक उवाच ॥ किमीदृशं नृशंसेन मया कृतमबुद्धिना ॥ यावज्जीवमिदं पापं हृदयं मे प्रधक्ष्यति ॥ ७६ ॥ यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ॥ आत्मना च कृतं पापमात्मनैवोपभुज्यते ॥ ७७ ॥ पापं चिंतयते यस्तु ब्रवीति च करोति च ॥ स पापनिरतो नित्यं पापयोनिषु जायते ॥ ७८ ॥ पूर्वं प्रदेशाः शुचयः परिहर्तव्यतां गताः ॥ अस्य देहस्य दौरात्म्याच्छ्मशानांताः स्थलादयः ॥ ७९ ॥ ये पापाचरणान्येव मूर्ध्नि कुर्युरशंकिताः ॥ स कायः परिपीडार्थे धार्यतामिह कोऽनयः ॥ ८० ॥ सोऽहं पापमतिश्चैव पापाचाररतस्तथा ॥ पतिष्यामि महाघोरे नरके नात्र संशयः ॥ ८१ ॥ कृमयो भस्म विष्ठा च यस्यावस्थेयमीदृशी ॥ कथं कायस्य तस्यार्थे पापं वै कुरुते नरः ॥ ८२ ॥ कथं तु पापकर्माणो नरा रात्रिषु शेरते ॥ मरणांतरिता येषां नरके तीव्रवेदना ॥ ८३ ॥ अहो खलु कपोतेन स्वदेहं संप्रयच्छता ॥ आतिथ्यधर्मः सुमहान् दर्शितो गृहमेधिनाम् ॥ ८४ ॥ धिङ् मां दुष्कृतकर्माणं पापेषु कृतनिश्चयम् ॥ शुभं कर्म परित्यज्य योऽहं हिंसारतः सदा ॥ ८५ ॥ यो हिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ॥ स

जीवंश्च मृतश्चैव न किञ्चित्सुखमेधते ॥ ८६ ॥ नूनं मम नृशंशस्य कपोतेन महात्मना ॥ प्रयच्छता स्वमांसानि प्रत्यादेशः प्रदर्शितः ॥८७॥ अद्यप्रभृति देहं स्वं सर्वभोगविवर्जितम् ॥ तोयस्वल्पमिव ग्रीष्मः शोधयिष्याम्यहं स्वयम् ॥ ८८ ॥ शीतवातातपसहः कृशोऽथ मलिनस्तथा ॥ उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम् ॥ ८९ ॥ नापः पुनंति पापानि न शिला नापि चाश्रमाः ॥ आत्मा पुनाति स्वात्मानं यदि पापांन्निवर्तते ॥ ९० ॥ आत्मैव स्वात्मनो बंधुरात्मैव रिपुरात्मनः ॥ बंधुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ॥९१॥ आत्मनैव यदात्मानमहितेभ्यो निवारयेत् ॥ कोऽन्योऽधिकतरस्तस्मादात्मानं वारयिष्यति ॥ ९२ ॥ भीष्म उवाच ॥ इत्थं धर्मप्रभावेण धार्मिकेण समागमात् ॥ धर्मे बभूवास्य मतिः पापस्यापि युधिष्ठिर ॥ ९३ ॥ ततो यष्टिं शलाकां च जालकं पंजरं तथा ॥ बभंज लुब्धको दीनां कपोतीं च मुमोच ह ॥ ९४ ॥ लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम् ॥ कपोती विललापार्ता शोकसंविग्नमानसा ॥ ९५ ॥ कपोत्युवाच ॥ नाहं ते विप्रियं कांत कदाचिदपि संस्मरे ॥ सभाग्या लभते नारी गुणाढ्यं त्वादृशं पतिम् ॥ ९६ ॥ पुष्पितेषु वनाग्रेषु नदीनां पुलिनेषु च ॥ केदारेषु च शैलानां रमिताहं त्वया सह ॥ ९७ ॥ न कार्यमद्य मे नाथ जीवितेन त्वया विना ॥ दीनायाः पतिहीनायाः किं तस्या जीविते फलम् ॥९८॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः ॥ अमितस्य हि दातारं भर्त्तारं का न पूजयेत् ॥ ९९ ॥ अपि कोटिधना नारी बहुपुत्रसुहृद्वृता ॥ शोच्या भवति बंधूनां पतिहीना विहंगम ॥ १०० ॥ गंधैर्माल्यैस्तथा धूपैर्विचित्रैर्भूषणैरपि ॥ वासोभिः शयनीयैश्च विधवा किं करिष्यति ॥ १०१॥ वैधव्यसदृशं दुःखं स्त्रीणामन्यत्र विद्यते ॥ धन्यास्ता योषितो यास्तु म्रियंते भर्तुरग्रतः ॥ १०२ ॥ कीदृशं नाम तद्दुःख-

मतः कष्टतरं खलु ॥ भविष्यत्यपरं यन्मे प्राणानपहरिष्यति ॥ १०३ ॥ नातंत्री वाद्यते वीणा नाचक्रो भ्रंमते रथः ॥ नापतिः सुखमाप्नोति नारी बंधुशतैरपि ॥ १०४ ॥ दरिद्रो व्यसनी वृद्धो व्याधितो विकलस्तथा ॥ पतितः कृपणो दीनः स्त्रीणां भर्त्ता परा गतिः ॥ १०५ ॥ नास्ति भर्तृसमो धर्मो नास्ति धर्मसमः सुहृत् ॥ नास्ति धर्मसमो नाथो नास्ति भर्तृसमा गतिः ॥ १०६ ॥ भीष्म उवाच ॥ एवं विलप्य बहुशः कृपणं भृशदुःखिता ॥ पतिव्रताथ संदीप्तं तमेवाग्निं विवेश सा ॥१०७॥ ततो दिव्यांबरधरं दिव्याभरणभूषितम् ॥ दिवि दिव्यविमानस्थं भर्तारं स्वं ददर्श सा ॥ १०८ ॥ कपोतेन च सा दृष्टा कपोती दिव्यरूपिणी ॥ हर्षेण महताविष्टः परिष्वज्येदमब्रवीत् ॥१०९॥ कपोत उवाच ॥ अहो मामनुगच्छन्त्या कृतं साधु त्वया शुभे ॥ क्षणमात्रेण दुःखेन सुखमत्यंतमूर्जितम् ॥११०॥ तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानुषे ॥ तावत्कालं वसेत्स्वर्गे भर्त्तारं यानुगच्छति ॥१११॥ व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ॥ तथा स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥ ११२ ॥ दुर्वृत्तं वा सुवृत्तं वा सर्वपापरतं तथा ॥ भर्त्तारं तारयत्येषा भार्या धर्मविनिश्चया ॥ ११३ ॥ भीष्म उवाच ॥ एवमुक्त्वा स धर्मात्मा कपोतः सह भार्यया ॥ दिव्यं विमानमारुह्य मुमुदे देववच्चिरम् ॥ ११४ ॥ लुब्धकोऽपि ततो राजन् वैराग्यं परमाश्रितः ॥ महाप्रस्थानमाश्रित्य जगाम दिशमुत्तराम् ॥ ११५ ॥ त्यक्त्वा कामं भयं लोभं दंभं क्रोधं मदं तथा ॥ अहंकारमसूयां च मानं मत्सरमेव च ॥ ११६ ॥ समदुःखसुखो भूत्वा समलोष्ठाश्मकांचनः ॥ अभयं सर्वभूतेभ्यो दत्त्वा वाक्चित्तकर्मभिः ॥ ११७ ॥ एवं स कृत्वा संकल्पं निर्द्वंद्वः संयतेंद्रियः ॥ विवेश तद्वनं घोरं बहुव्यालसमाकुलम् ॥ ११८ ॥ सकंटकविभिन्नांगो लोहितो विकृतच्छविः ॥ विच-

१ भ्राम्यति ।

चार वने तस्मिञ्जडोऽधबधिराकृतिः ॥ ११९ ॥ तदोत्थितो महांस्तत्र वेणुसंघर्षजोऽनलः ॥ स तद्वने ददाहाशु युगांताग्निसमप्रभः ॥१२०॥ तं दृष्ट्वाद्भुतमायांतं दावाग्निमतिभीषणम् ॥ लुब्धकोऽभिमुखः प्रायात्प्रहृष्टेनांतरात्मना ॥१२१॥ ततस्तेनाग्निना दग्धः स सद्यः क्षीणकिल्बिषः ॥ दिव्यं विमानमास्थाय जगाम त्रिदशालयम् ॥१२२॥ एवं खलु कपोतश्च कपोती च पतिव्रता ॥ लुब्धकश्च गतः स्वर्गं धर्मं कृत्वा सुदुष्करम् ॥ १२३ ॥ वैशंपायन उवाच ॥ यान्याप्येवंविधा नारी भर्तारमनुगच्छति ॥ सा भर्तृसहिता स्वर्गे कपोतीव विराजते ॥ १२४ ॥ भीष्म उवाच ॥ एवमेषा पुरा राजन् लुब्धकस्य महात्मनः ॥ कपोतकस्य संसर्गाद्गतिः पूज्येन कर्मणा ॥१२५॥ युधिष्ठिर महानेव धर्मो धर्मभृतां वर ॥ कथितस्ते महाबाहो सर्वपापप्रणाशनः ॥१२६॥ तस्मात्त्वमपि राजेंद्र धर्मनिष्ठितमानसः ॥ सर्वभूतहितार्थाय कुरु कार्यमतन्द्रितः ॥ १२७ ॥ य इदं शृणुयान्नित्यं कपोताख्यानमुत्तमम् ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥१२८॥ कपोतमग्नौ पतितं निराकुलं निरीक्ष्य शांतिं प्रययौ स लुब्धकः ॥ ततः कपोती च ययौ तदा दिवं स चापि चैवं सुमहात्मसंगमात् ॥ १२९ ॥

इति श्रीमदितिहाससमुच्चये कपोताख्यानं नामाष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ९ ।

युधिष्ठिर उवाच ॥ क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः ॥ दुर्गाण्यभितरेत्केन तन्मे ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ आश्रमेषु यथोक्तेषु यथोक्तं वै द्विजातयः ॥ वर्तंते संयतात्मानो दुर्गाण्यतितरंति ते ॥ २ ॥ ये न हिंसन्ति भूतानि कर्मणा मनसा गिरा ॥ आनृशंस्यरतात्मानो दुर्गाण्यतितरंति ते ॥ ३ ॥ येऽग्निहोत्रपरा नित्यं नित्यं चातिथिपूजकाः ॥ नित्यं स्वाध्यायशीलाश्च दुर्गाण्य-

तितरंति ते ॥ ४ ॥ ये न मानमिच्छंति मानयंति च ये परान् ॥ व्यथिता नावमानेन दुर्गाण्यतितरंति ते ॥५॥ ये वासुदेवमर्चंति कर्मणा मनसा गिरा ॥ सर्वपापविनिर्मुक्ता दुर्गाण्यतितरंति ते ॥ ६ ॥ धर्मार्थं जीवितं येषां संतानार्थं च मैथुनम् ॥ कायार्थं भोजनं चैव दुर्गाण्यतितरंति ते ॥ ७ ॥ मातृवत्स्वसृवच्चापि तथा दुहितृवच्च ये ॥ परदारेषु वर्तंते दुर्गाण्यतितरंति ते ॥ ८ ॥ ये सदा शांतमनसो योगध्यानपरायणाः ॥ सत्ये स्थिता महाभागा दुर्गाण्यतितरंति ते ॥ ९ ॥ येऽधिक्षिप्ता न कुप्यंति न हिंसंति च हिंसिताः ॥ सर्वभूतसहा दांता दुर्गाण्यतितरंति ते ॥ १० ॥ कृच्छ्रेण वर्तमानाश्च ये न याचंति कञ्चन ॥ संतोषाभिरता धीरा दुर्गाण्यतितरंति ते ॥ ११ ॥ आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम् ॥ धर्मेण जयमिच्छंति दुर्गाण्यतितरंति ते ॥ १२ ॥ ये तपांसि च तप्यंति कौमारे ब्रह्मचारिणः ॥ जितेंद्रिया जितक्रोधा दुर्गाण्यतितरंति ते ॥ १३ ॥ येभ्यो न केचित्त्रस्यंति न त्रस्यंति कुतश्च ये ॥ येषामात्मसमो लोको दुर्गाण्यतितरंति ते ॥ १४ ॥ ये पापानि न कुर्वंति कर्मणा मनसा गिरा ॥ कर्मैकनिष्ठमनसो दुर्गाण्यतितरंति ते ॥ १५ ॥ ये निवृत्ताः परस्वेभ्यो मनोवाक्कायतः सदा ॥ परश्रिया न तप्यन्ते दुर्गाण्यतितरंति ते ॥ १६ ॥ निवृत्ता ये च मांसेभ्यः पृषन्मांसेभ्य एव च ॥ निवृत्ता ये च मद्येभ्यो दुर्गाण्यतितरंति ते ॥ १७ ॥ ये वदंतीह सत्यानि प्राणत्यागेऽप्युपस्थिते ॥ प्रमाणभूता भूतानां दुर्गाण्यतितरंति ते ॥ १८ ॥ दुर्बलार्थं बलं येषामर्थो दानार्थमेव च ॥ अरत्यर्थमधीतं च दुर्गाण्यतितरंति ते ॥ १९ ॥ परैः परिगृहीतं यत् तृणमप्यटवीगतम् ॥ काष्ठं वा नोपगृह्णंति दुर्गाण्यतितरंति ते ॥ २० ॥ अनादिनिधने ये च जगतां प्रभवाप्यये ॥ भक्ता नारायणे देवे दुर्गाण्यतितरंति ते ॥ २१ ॥ मंगल्ये मांगल्ये चैव सर्वपापप्रणाशने ॥ भक्तास्त्रिविक्रमे देवे दुर्गाण्यतितरंति ते ॥ २२ ॥ दुःखावर्ते

तमोधारे धर्माधर्मजले तथा ॥ क्रोधपंके मदग्राहे लोभबुद्बुदसंकुले ॥ २३ ॥ मोहगंभीरपाताले कामयानविभूषिते ॥ मज्जन्तं तारयत्येको विष्णुः संसारसागरे ॥ २४ ॥ दुर्गातितरणं चेदं ये पठंति सदादृताः ॥ श्रावयंति च विप्रेभ्यो दुर्गाण्यातितरन्ति ते ॥२५॥ एतत्ते सर्वमाख्यातं मया तत्त्वेन भारत ॥ यथा तरंति दुर्गाणि कर्मभिः प्रेत्य मानवाः॥२६॥

इति श्रीमदितिहाससमुच्चये दुर्गातितरणोपाख्यानं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः १० ।

युधिष्ठिर उवाच ॥ किमर्थं क्लिश्यमाना वै ब्राह्मणाः शंसितव्रताः ॥ न राज्ञां प्रतिगृह्णन्ति तन्मे ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ राजानः प्रायशो राजन् राज्यैश्वर्यमदान्विताः ॥ स्वधर्मे नावतिष्ठन्ते स्वातन्त्र्याद्वर्जयंत्युत ॥ २ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ वृषादर्भैश्च संवादं सप्तर्षीणां च भारत ॥ ३ ॥ कश्यपोऽत्रिवसिष्ठश्च भरद्वाजोऽथ गौतमः ॥ विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुंधती ॥ ४ ॥ नाम्ना चण्डीति[1] विख्याता स्वधर्मनिरता सदा ॥ सर्वेषामपि तेषां तु सैवाभूत्परिचारिका ॥ शूद्रः पशुसखश्चैव तस्या भर्ता बभूव ह ॥ ५ ॥ अथ सर्वे तपस्यंतः पुरा चेरुर्महीमिमाम् ॥ समाधिना जिगीषंतो ब्रह्मलोकं सनातनम् ॥ ६ ॥ अथाभवदनावृष्टिः कदाचिन्महती तथा ॥ कृच्छ्रप्राणे त्वभूत्तत्र सर्वलोकः क्षुधान्वितः ॥ ७ ॥ ततो निरन्ने लोकेऽस्मिन्नात्मानं ते परीप्सवः॥ मृतं कुमारमादाय कृच्छ्रप्राणास्तदापचन् ॥ ८ ॥ अथ पर्य्यचरंस्तत्र क्लिश्यमानान् हि तानृषीन् ॥ दृष्ट्वा राजा वृषादर्भिः प्रोवाचेदं वचस्तदा ॥ ९ ॥ वृषादर्भिरुवाच ॥ प्रतिग्रहो[2] ब्राह्मणानां दृष्टा वृत्तिरनिंदिता ॥ तस्मात्प्रतिग्रहो

---

१ चण्डी काचित्तेषां परिचारिका तस्या भर्त्ता पशुसख इत्यर्थः । अत एव अग्रे चण्डयुवाचेति संगच्छते । २ इदं पदद्वयवाच्यं पूर्वान्वयि ।

युक्तो गृह्णीध्वं मुनिपुंगवाः ॥ १० ॥ पुरान् ग्रामान् व्रीहियवान् रसांश्च रत्नादिकं कांचनं गां च धेनुम् ॥ एतत्सर्वं तदहं वो ददामि न चाभक्ष्यं भक्षयध्वं शवं हि ॥ ११॥ ऋषय ऊचुः ॥ राजन्प्रतिग्रहो राज्ञां मध्वास्वादो विषोपमः ॥ तज्जानन्नेव कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥१२॥ दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ॥ दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ १३ ॥ यो राज्ञः प्रतिगृह्णंति ब्राह्मणो लोभमोहतः ॥ तामिस्रादिषु घोरेषु नरकेषु पचन्ति ते ॥ १४ ॥ तद्गच्छ कुशलं तेऽस्तु सह दानेन पार्थिव ॥ अर्थिभ्यो दीयतामेतदित्युक्त्वा ते वनं ययुः ॥ १५ ॥ अथ राज्ञः समादेशाद्गता तत्रास्य मंत्रिणः ॥ औदुंबराणि[1] व्यकिरन् हेमगर्भाणि भूतले ॥ १६ ॥ ततो वन्यान्विचिन्वंतस्तेऽगृह्णंस्तत्र तान्यपि ॥ गुरूणीति विदित्वा तु न ग्राह्याण्यत्रिरब्रवीत् ॥१७॥ अत्रिरुवाच ॥ न स्महे मूढविज्ञाना नस्महे मंदबुद्धयः ॥ हैमानीमानि जानीमः प्रतिबुद्धाः स्म स्वप्नतः ॥ १८ ॥ इह त्वेतदुपादत्तं प्रेत्य तत्कटुकोदयम् ॥ तस्मान्न ग्राह्यमेतद्वै सुखमत्यन्तमिच्छता ॥ १९ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ नालमेकस्य तत्सर्वमिति मत्वा समं व्रजेत् ॥ २० ॥ वसिष्ठ उवाच ॥ धर्मार्थं संचयो यस्य द्रव्याणां नात्र शस्यते ॥ तपःसंचय एवेह विशिष्टो द्रव्यसंचयात् ॥ २१ ॥ त्यजतः संचयान्सर्वान् यांति नाशमुपद्रवाः ॥ न हि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ॥२२॥ यथा यथा न गृह्णंति ब्राह्मणाः सत्प्रतिग्रहान् ॥ तथा तथा हि संतोषाद्ब्राह्मं तेजो विवर्द्धते ॥ २३ ॥ अकिंचनत्वं राज्यं च तुलया समतोलयत् ॥ अकिंचनत्वमधिकं राज्यादपि दुरात्मनः ॥ २४ ॥ कश्यप उवाच ॥ अनर्थो ब्रह्मऋषय-

---

१ औदुम्बराणि हेमगर्भाणीति विशेषणद्वयं फलस्य, अत एव अग्रिमे श्लोके पञ्चाशत्तमे " इत्युक्त्वा हेमगर्भाणि त्यक्त्वा तानि फलानि ते ॥ " इति वर्णितं संगच्छते इति प्रतिभाति ॥

स्वार्थस्य निचयो महान् ॥ अर्थैश्वर्यविमूढो हि श्रेयसो भ्रश्यते द्विजः ॥ २५ ॥ अर्थसंपद्विमोहाय विमोहो नरकाय च ॥ तस्मादर्थमनर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ २६॥ यस्य धर्मार्थमर्थेहा तस्य हानिर्हि शोभना ॥ प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् ॥ २७॥ योऽर्थेन साध्यते धर्मः क्षयिष्णुः स प्रकीर्तितः ॥ यः परोऽर्थपरित्यागात्सोऽक्षयो मुक्तिलक्षणः ॥ २८ ॥ भरद्वाज उवाच ॥ जीर्यंति जीर्यतः केशा दंता जीर्यंति जीर्यतः ॥ चक्षुःश्रोत्राणि जीर्यंति तृष्णैका तरुणायते॥२९॥ सूच्या सूत्रं यथा वस्त्रे संचारयति सूचिकः ॥ तद्वत्संसारसूत्रे च तृष्णासूच्या निबध्यते ॥ ३० ॥ यथा चांगरुहो जातो वर्द्धमानस्य वर्द्धते ॥ तथैव तृष्णा वित्तेन वर्द्धमानेन वर्द्धते ॥ ३१ ॥ अनंतपारा दुष्पूरा तृष्णा दुःखशतावहा ॥ अधर्मबहुला चैव तस्मात्तां परिवर्जयेत् ॥३२॥ गौतम उवाच ॥ संतुष्टः को न शक्नोति फलमूलैश्च वर्तितुम् ॥ सर्वस्त्विंद्रियलोभेन संकटान्यवगाहते ॥ ३३ ॥ सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् ॥ ऊढोपानत्कपादस्य ननु चर्मास्तृतैव भूः ॥३४॥ संतोषामृततृप्तानां यत्सुखं शांतचेतसाम् ॥ कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥३५॥ असंतोषः परं दुःखं संतोषः परमं सुखम् ॥ तस्मात्सुखार्थी पुरुषः संतुष्टः सततं भवेत् ॥ ३६॥ विश्वामित्र उवाच ॥ कामं कामयमानस्य यदि कामः स सिध्यति ॥ ततोऽपि परमं कामं भूयो विंदति मानवः ॥ ३७ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥३८॥ कामानभिलषन्मोहान्नश्वरं सुखमेधते ॥ श्येनालयतरुच्छायां व्रजन्निव कपिंजलः ॥ ३९ ॥ चतुःसागरपर्यंतां भुंक्ते यो पृथिवीमिमाम् ॥ तुल्याश्मकांचनो यश्च स कृतार्थो न पार्थिवः ॥४०॥ जमदग्निरुवाच ॥ प्रतिग्रहस्य संत्यागाद्यत्तपो वर्द्धते महत् ॥ तत्तपो ब्राह्मणस्येह धनलोभात्परिस्रवेत् ॥ ४१ ॥ योऽर्थं प्राप्य नृपाद्विप्रः शोचितव्ये प्रहृष्यति ॥ न पश्यति विमूढात्मा नरके

यातनाभयम् ॥ ४२ ॥ प्रतिग्रहसमर्थोऽपि न प्रसज्जेत्प्रतिग्रहे ॥ प्रतिग्रहेण विप्राणां ब्राह्मं तेजः प्रशाम्यति ॥ ४३ ॥ प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात् ॥ परेभ्यो ददतां धर्मः स एवाप्रतिगृह्णताम् ॥ ४४ ॥ अरुन्धत्युवाच ॥ बिसतंतुर्यथा नित्यं मध्यस्थान्संततान्विशेत् ॥ तृष्णातंतुरनाद्यंतस्तथा देहगतः सदा ॥ ४५ ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ यासौ प्राणांतको रोगस्तां तृष्णां त्यजतः सुखम् ॥४६॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥ येनाशां पृष्ठतः कृत्वा नैराश्यमवलंबितम् ॥ ४७ ॥ चण्डयुवाच ॥ उग्रादितोभयाद्यस्माद्बिभ्यर्ताभे मुनीश्वराः॥ बलीयांसो दुर्बलत्वात्ततोऽतीव बिभेम्यहम् ॥ ४८ ॥ पशुसख उवाच ॥ यदाचरंति विद्वांसः सदा धर्मपरायणाः ॥ तदेव विदुषा कार्यमात्मनो हितमिच्छता ॥४९॥ भीष्म उवाच ॥ इत्युक्त्वा हेमगर्भाणि त्यक्त्वा तानि फलानि ते ॥ ऋषयो जग्मुरन्यत्र सर्वे एव दृढव्रताः ॥ ५० ॥ ततस्ते विचरंतो वै वने मूलफलाशनाः ॥ ददृशुः सहसा प्राप्तं परिव्राजं शुनःसखम् ॥ ५१ ॥ ते तेन सहिताः सर्वे गत्वा किंचिद्वनांतरम् ॥ सरोऽपश्यन्सुविस्तीर्णं पद्मोत्पलकुलावृतम् ॥५२॥ ततोऽवतीर्य कृत्वा च ते बिसानि च तापसाः ॥ तीरे निक्षिप्य सरसश्चक्रुः पुण्यजले क्रियाः ॥ ५३ ॥ अथोत्तीर्य जलात्तस्मात्ते समेत्य परस्परम् ॥ बिसानि तान्यपश्यंत इदं वचनमब्रुवन् ॥ ५४ ॥ ऋषय ऊचुः ॥ केन कृच्छ्राभितप्तानामस्माकं पापकर्मणा ॥ नृशंसेनापनीतानि बिसान्याहारकर्मणा ॥ ५५ ॥ वयमेवेह नान्योऽस्ति लोपितानि बिसानि च ॥ तस्मान्नान्यकृतं त्वेत्तदस्मास्वेव विचिंत्यताम् ॥ ५६ ॥ भीष्म उवाच ॥ ते शंकमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ॥ चक्रुश्च निश्चयं सर्वे शपथं प्रति भारत ॥ ५७ ॥ ब्रह्मण्यं वरदं विष्णुं सर्वदेवनमस्कृतम् ॥ त्रैलोक्यस्थितिसंहारसृष्टिहेतुं तमीश्वरम् ॥५८॥ धातारं च विधातारं संधातारं जगद्गुरुम् ॥ विहाय च भजत्यन्यं बिसस्तेयं

करोति यः ॥५९॥ सर्वत्र प्राणिहंता च न्यासलोपं करोति यः ॥ कूटसाक्षित्वमभ्येतु विशस्तेयं करोति यः ॥६०॥ दंभेन धर्मं चरतु राजानं चोपसेवताम् ॥ मधु मांसं च सोऽश्नातु विशस्तेयं करोति यः ॥ ६१ ॥ कश्यप उवाच ॥ पतिनिंदापरो यस्तु वैष्णवानवमन्यताम् ॥ अध्यात्मविद्याविमुखो विशस्तैन्यं करोति यः ॥ ६२ ॥ अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु ॥ द्विजाञ्जयतु वादेन विशस्तैन्यं करोति यः ॥६३॥ अनृतं भाषतु सदा वर्द्धकेनापि जीवतु ॥ ददातु कन्यां शुल्केन विशस्तेयं करोति यः ॥ ६४ ॥ वशिष्ठ उवाच ॥ इतिहासकथाः श्रुत्वा परनिंदावशो भवेत् ॥ धर्मोपदेशमल्पं तु विशस्तेयं करोति यः ॥ ६५ ॥ इतिहासपुराणानि धर्मशास्त्राणि सर्वदा ॥ न शृणोतु स दुर्बुद्धिर्विशस्तेयं करोति यः ॥६६॥ अनृतौ मैथुनं यातु मार्जारादिकपालकः ॥ अन्योन्यं चातिथिः सोऽस्तु विशस्तेयं करोति यः ॥६७॥ एककूपोदकग्रामे ब्राह्मणो वृषलीपतिः ॥ तयोः सलोकतां यातु विशस्तेयं करोति यः ॥६८॥ भरद्वाज उवाच ॥ श्रुत्वा तु धर्मशास्त्राणि पुनः पापं निषेवताम् ॥ त्यागशक्तिविहीनोऽस्तु विशस्तेयं करोति यः ॥ ६९ ॥ विष्णुवृत्तिपरो न स्याद्विद्याधर्मपराङ्मुखः ॥ अधर्मव्रतशीलः स्याद्विशस्तेयं करोति यः ॥७०॥ नृशंसः सोऽस्तु सर्वेषु समृद्धो वाप्यहंकृतः ॥ मत्सरी पिशुनश्चैव विशस्तेयं करोति यः ॥७१॥ प्रत्याक्रोशेदिहाकुष्टस्ताडितैः प्रतिताडितः ॥ विक्रीणातु रसांश्चापि विशस्तेयं करोति यः ॥ ७२ ॥ गौतम उवाच ॥ अतिथिं त्यजतु[1] प्राप्तं पाकभेदं करोतु सः ॥ शूद्रान्नं स सदाश्नातु विशस्तेयं करोति यः ॥ ७३ ॥ विश्वासघातकः सोऽस्तु वंचनाभिरतः सदा ॥ कूटकर्मरतः सोऽस्तु विशस्तेयं करोति यः ॥ ७४ ॥ अंतर्दुष्टो बहिः शांतो ब्रह्मविद्वेषतत्परः ॥ धर्मनिंदापरः सोऽस्तु विशस्तेयं करोति यः ॥ ७५ ॥

---

१ शास्त्विति शेषः । २ वसत्विति शेषः ।

नित्यानुष्ठानसंसक्तान्सिद्धांतज्ञानदुर्बलान् ॥ व्यामोहयतु दुर्बुद्धिर्विशस्तेयं करोति यः ॥ ७६ ॥ तीर्थयात्रोपरोद्धास्तु तीर्थानां चैव दूषकः ॥ तीर्थेषु पापकारी स्याद्विशस्तेयं करोति यः ॥ ७७ ॥ पाखंडधर्मशीलोऽस्तु तत्पराणां च साधकः॥ब्राह्मण्यदूषकोऽनार्यो विशस्तैन्यं करोति यः ॥ ७८ ॥ अविज्ञातश्च मूर्खश्च तथा नक्षत्रसूचकः ॥ निंदिताशनशीलोऽस्तु विशस्तैन्यं करोति यः ॥७९॥ नित्यं कामरतः सोऽस्तु दिवा सेवतु मैथुनम् ॥ नित्यं च वंचकः सोऽस्तु विशस्तैन्यं करोति यः ॥८०॥ रसविक्रयकश्चास्तु केशविक्रयकस्तथा ॥ विषविक्रयकश्चास्तु विशस्तैन्यं करोति यः ॥ ८१ ॥ परापवादं वदतु परदारांश्च सेवताम् ॥ परस्वानि हरेद्वापि विशस्तेयं करोति यः ॥८२॥ आत्मार्थमन्नं पचतु त्यक्त्वा भृत्यातिथींस्तथा ।। पतितान्नं च सोऽश्नातु विशस्तेयं करोति यः ।। ८३ ॥ जमदग्निरुवाच ॥ देवनिंदापरः सोऽस्तु द्विजनिंदापरस्तथा ॥ पशुपीडारतः सोऽस्तु विशस्तैन्यं करोति यः ॥ ८४ ॥ चौर्यकर्मरतः सोऽस्तु चौराणां चैव सूचकः ॥ मिथ्यापवादं वहतु विशस्तेयं करोति यः॥८५॥ वेदनिंदापरः सोऽस्तु ग्रामनिंदापरस्तथा ॥ राज्ञो निंदापरश्चैव विशस्तेयं करोति यः ॥ ८६ ॥ मातरं पितरं चैव सोऽवमत्य तु दुर्मतिः ॥ श्वशुरादत्तवृत्तिः स्याद्विशस्तैन्यं करोति यः ॥ ८७ ॥ परपाकं सदाश्नातु दिवा चरतु मैथुनम् ॥ वेदविक्रयकश्चास्तु विशस्तेयं करोति यः ॥ ८८ ॥ अतिक्लेशादधर्माच्च शत्रूणां प्रतिपादनात् ॥ अर्थार्ज्जनपरः सोऽस्तु विशस्तेयं करोति यः ॥ ८९ ॥ अरुंधत्युवाच ॥ परवादपरः सोऽस्तु परद्वेषणतत्परः ॥ परवेश्मरतः सोऽस्तु विशस्तैन्यं करोति यः ॥९०॥ इतिहासपुराणोक्तं धर्मशास्त्रोक्तमेव वा ॥ उत्सृज्य धर्मं चरतु विशस्तेयं करोति यः ॥९१॥ भर्तारं पितृमित्राणि सुहृदो मित्रबांधवान् ॥ परित्यज्यान्यभावाद्वा विशस्तेयं करोति यः ॥ ९२ ॥ श्वश्रूर्विवादं जयतु भर्तृहीना च जीवतु ॥ एका वै स्वादम-

१ न पोषत्विति शेषः ।

श्चातु विशस्तेयं करोति यः ॥९३॥ दरिद्रं विकलं हीनं रोगार्त्तं वृद्धमेव वा ॥ सोऽवमन्यतु भर्तारं विशस्तेयं करोति यः ॥ ९४ ॥ चंडचुवाच ॥ शूद्रा भवतु सा नारी शूद्रेभ्यो दातुमिच्छतु ॥ शूद्रप्रेक्षा सदा वास्तु विशस्तेयं करोति या ॥ ९५ ॥ स्वामिनः प्रतिकूलास्तु बिभ्राणा तेज अन्यतः ॥ देवतास्वनमस्कारा विशस्तेयं करोति या ॥९६॥ पशुसख उवाच ॥ आगच्छन्त्याः पुरो नार्य्या मार्गस्थानं न वर्जयेत् ॥ नियोगं वंचयित्वैव विशस्तेयं करोति यः ॥९७॥ हीनजातिपरो भृत्यः सोऽस्तु जन्मनि जन्मनि ॥ सर्वधर्मक्रियाहीनो विशस्तेयं करोति यः ॥ ९८ ॥ शुनःसख उवाच ॥ न्यायेन वेदानध्येतु गृहस्थोऽस्तु प्रियातिथिः ॥ सत्यं वदतु वादेषु विशस्तेयं करोति यः॥९९॥ अग्नीनुपास्यविधिवद्य-ज्वा भवतु नित्यशः ॥ ब्रह्मणः सदनं यातु विशस्तेयं करोति यः ॥ १०० ॥ रागद्वेषादिरहितः सदा परहिते रतः ॥ संग्रामे स्थिरतां यातु ध्यानयोगपरायणः ॥ १०१ ॥ अध्यात्मविद्यानिरतो विषयेष्वपि निःस्पृहः ॥ सर्वद्वंद्वसहो दांतः समलोष्टाश्मकांचनः ॥ १०२ ॥ एकाकी परमार्थज्ञः सर्वसंगविवर्जितः ॥ ब्रह्मसायुज्यतां यातु विशस्तेयं करोति यः ॥ १०३ ॥ सर्वालंकरणोपेतां कन्या-माप्नोत्वनुत्तमाम् ॥ शुभां स ऋत्विङ्मुख्यात्त विशस्तेयं करोति यः ॥ १०४ ॥ ऋषय ऊचुः ॥ इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः ॥ त्वया कृतं विशस्तेयं सर्वेषां नः शुनःसख ॥ १०५ ॥ शुनः-सख उवाच ॥ मया त्वंतर्हितान्यासन्बिसानीमानि वो द्विजाः ॥ धर्मं वै श्रोतुकामेन जानीध्वं मां च वासवम् ॥१०६॥ अलोभादक्षया लोका जिता वो मुनिसत्तमाः ॥ विमानान्यधितिष्ठध्वं गच्छामस्त्रिदशालयम् ॥ १०७ ॥ भीष्म उवाच ॥ ततो महर्षयस्ते तु तं विज्ञाय पुरंदरम् ॥ तेनैव सह सुप्रीतास्तदा जग्मुस्त्रिविष्टपम् ॥ १०८ ॥ राज्ञः प्रतिग्रहं घोरं जानतो मुनिपुंगवाः ॥ भक्षयित्वा विशं याता न च तृष्णाजडी-

कृताः ॥१०९॥ एवं विलोभ्यमानास्ते भोगैर्बहुविधैरपि ॥ नैव लोभं तदा चक्रुस्ततो जग्मुस्त्रिविष्टपम् ॥११०॥ य इदं शृणुयान्नित्यमृषीणां चरितं महत् ॥ विमुक्तः सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥ १११ ॥

इति श्रीमदितिहाससमुच्चये सप्तर्षिवासवसंवादोपाख्यानं नाम दशमोऽध्यायः॥१०॥

## एकादशोऽध्यायः ११ ।

युधिष्ठिर उवाच ॥ पापस्य किमधिष्ठानं का प्रसूतिश्च भारत ॥ किं चास्य कारणं प्रोक्तं तन्मे ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च ॥ अत्र ते संशयो मा भूल्लोभः पापस्य कारणम् ॥ २ ॥ लोभात्क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्तते ॥ लोभात्मोहश्च माया च मानो मत्सर एव च ॥ ३ ॥ नार्थैः पूरयितुं शक्यो लोभो बहुविधैरपि ॥ नित्यं गंभीरतोयाभिरापगाभिरिवार्णवः ॥ ४ ॥ अष्टादश समस्तानि द्वीपान्यश्नन्पुरूरवाः ॥ तुतोष नैव रत्नानां लोभादिति हि नः श्रुतम् ॥ ५ ॥ सर्वभूतेष्वविश्वस्तः सर्वभूतेषु हिंसकः ॥ सर्वभूतेष्वमित्रस्तु लुब्धो भवति भारत ॥ ६ ॥ उत्पद्यते यदा भक्तिर्विष्णुपादांबुजार्चने ॥ तदा लोभः क्षयं याति सा त्वत्यन्तं सुदुर्लभा ॥ ७ ॥ सुमहांत्यपि शास्त्राणि धारयंते बहुश्रुताः ॥ छेत्तारः संशयानां च लोभग्रस्ता व्रजंत्यधः ॥ ८ ॥ लोभक्षये क्षयं यांति सर्वपापानि देहिनाम् ॥ लोभवृद्धौ च वर्धंते नृपते नात्र संशयः ॥ ९ ॥ यदा लोभः क्षयं याति यांति नाशमुपद्रवाः ॥ ततस्तु जायते पुंसां धर्मे बुद्धिः सुदुर्लभा ॥ १० ॥ धर्मार्थकाममोक्षाणां चतुर्णामिह साधनम् ॥ धर्ममेव परं प्राहुर्मुनयस्तत्त्वदर्शिनः ॥ ११ ॥ न चास्ति धर्मसंबंधो लोभाक्रांतस्य देहिनः ॥ स एव धर्मविध्वंसी लोभः परमदारुणः ॥१२॥ तस्मात्सर्वप्रयत्नेन त्यज लोभं युधिष्ठिर ॥ यदीच्छसि

महाराज शाश्वतीं गतिमात्मनः ॥ १३ ॥ विनष्टलोभा विषयेषु निःस्पृहाः प्रशांतचित्ताः परिहीनमत्सराः ॥ व्रजंति विष्णोः परमेव तत्पदं सनातनं यत्प्रवदंति योगिनः ॥ १४ ॥

इति श्रीमदितिहाससमुच्चये पापकारणोपाख्यानं नामैकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः १२ ।

युधिष्ठिर उवाच ॥ शमस्य तपसो वापि किं तु श्रेष्ठतमं मतम् ॥ एतं मे संशयं तात यथावद्वक्तुमर्हसि ॥ १ ॥ भीष्म उवाच ॥ विविधा विधयः प्रोक्ता धर्मस्येह महर्षिभिः ॥ स्वं स्वं विज्ञानमाश्रित्य शमस्तेषां परायणम् ॥ २ ॥ शमः पवित्रमतुलं शमः पुण्यमनुत्तमम् ॥ शमः सुखं शमः सत्यं शमः पापहरः स्मृतः ॥ ३ ॥ अत्रेवोदाहरंतीममिति-हासं पुरातनम् ॥ तुलाधारस्य संवादं जाजलेश्च महात्मनः ॥ ४ ॥ पुरा हि सागरोपांते जाजलिर्नामतो द्विजः ॥ तपस्तेपे महाघोरं वायुभक्षः समाहितः ॥ ५ ॥ तस्य वर्षाण्यनेकानि स्थाणुभूतस्य तिष्ठतः ॥ कुलिंगौ शकुनावेत्य नीडं शिरसि चक्रतुः ॥६॥ स तौ दया-वान् ब्रह्मर्षिरुपप्रेक्षत दंपती ॥ ततस्तौ मिथुनीभूतौ तत्रांडान्यव-मुंचतः ॥ ७ ॥ अंडेभ्यो त्वथ पुष्टेभ्यो त्वजायंत शकुंतकाः ॥ व्यव-र्द्धंताथ तत्रैव न चचाल स जाजलिः ॥ ८ ॥ कदाचिज्जातपक्षास्ते ख-मुत्पत्य विहंगमाः ॥ नैवाजग्मुर्यदा राजंस्ततः स प्रययौ नृप ॥ ९ ॥ अथास्फुटन्मदाविष्टः प्रोवाच न मया समः ॥ लोके-ऽस्मिंस्तपसा कश्चित्ततः खे वाक्यमब्रवीत् ॥ १० ॥ वारा-णस्यां निवसति तुलाधारो महामतिः ॥ सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ ११ ॥ तच्छ्रुत्वा वचनं तस्य तुलाधार-दिदृक्षया ॥ अचिरेणैव कालेन प्राप्तो वाराणसीपुरीम् ॥ १२॥ तत्रापश्य-

१ अर्हति ।

तुलाधारं विक्रीणंतं रसान्बहून् ॥ तुलाधारोऽपि तं दृष्ट्वा प्रतिपूज्याब्रवीदिदम् ॥ १३ ॥ तुलाधार उवाच ॥ अनाख्यातोऽपि विदितो मम त्वं द्विजसत्तम ॥ यच्चेहागमने कार्यं तदप्यवगतं मया ॥ १४ ॥ तप्यतस्ते समुद्रांते जाता मूर्ध्नि शकुंतकाः ॥ ततस्त्वां विस्मयाविष्टं वागुवाचाशरीरिणी ॥ १५ ॥ तां च श्रुत्वा महर्षे त्वं मां दिदृक्षुरिहागतः ॥ तद्वदाशु द्विजश्रेष्ठ प्रियं किं करवाणि ते ॥ १६ ॥ जाजलिरुवाच ॥ विक्रीणतः सर्वरसान्सर्वगंधांश्च नित्यशः ॥ कथं ते नैष्ठिको धर्मो विदितस्तद्वदस्व मे ॥ १७ ॥ तुलाधार उवाच ॥ न मेऽधीतानि शास्त्राणि नोपात्ताश्चापि तद्विदः ॥ पूर्वाभ्यासादयं विप्र धर्मः प्रादुरभून्मम ॥ १८ ॥ कर्मणा मनसा वाचा यं नित्यं सेवते नरः ॥ तदभ्यासो भवेन्नित्यं माभूत्ते तत्र संशयः ॥ १९ ॥ यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः ॥ सुखितानि सुखी चैव स वै वेद च नैष्ठिकम् ॥ २० ॥ अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ॥ या वृत्तिः स परो धर्मस्तेन जानामि जाजले ॥ २१ ॥ परिच्छिते काष्ठतृणैर्मयेदं शरणं कृतम् ॥ विक्रीणामि रसांश्चापि मद्यवर्ज्यं न मायया ॥ २२ ॥ यः करोति जडांधानां वणिक्कर्मणि वंचनम् ॥ स याति निरयं घोरं धनं तस्यापि हीयते ॥ २३ ॥ सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ॥ कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ २४ ॥ पापादुद्विजते लोकः सर्वो मृत्युमुखादिव ॥ वाङ्मनःकर्मभिश्चैव स तां गतिमवाप्नुयात् ॥ २५ ॥ नाहं परेषां कर्माणि स्तौमि निंदामि वा पुनः ॥ समोऽस्मि सर्वभूतानां पश्य मे जाजले व्रतम् ॥ २६ ॥ यथा पंग्वंधबधिराः क्लीबमूकजडादयः ॥ दैवेनापादितद्वाराः सोपमा विषयेषु मे ॥ २७ ॥ यथा क्षुधातुरकृशा निस्पृहा विषयान्प्रति ॥ तथैव कामभोगेषु मम वै जाजले व्रतम् ॥ २८ ॥ सर्वभूतात्मभूतस्य समं सर्वत्र पश्यतः ॥ देवांपि

१ आर्षः प्रयोगः ।

मार्गे मुंचंत ह्यपदस्य पदैषिणः॥ २९॥ यदा हि कुरुते भावं सर्वभूतेष्वपापकम्॥ कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा॥ ३०॥ यः स्तौति यश्च मां द्वेष्टि तावुभावपि मे समौ॥रागद्वेषविहीनस्य समावेव प्रियाप्रियौ॥३१॥ सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः॥ शमो हि जाजले तीर्थं मा स्म ते संशयो भवेत्॥ ३२॥ शम एव परं तीर्थं शम एव परं तपः॥ शम एव परं ज्ञानं शमो योगः परस्तथा॥ ३३॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा॥ सर्वे तेऽथ शमेनैव प्राप्नुवंति परां गतिम्॥ ३४॥ दानमिज्या तपः शौचं तीर्थं सेवा तथा श्रुतम्॥ अशान्तमनसः पुंसः सर्वमेतदनर्थकम्॥ ३५॥ रागद्वेषानृतक्रोधलोभमोहमदादिभिः॥ सर्वदोषैर्विनिर्मुक्तो यः स शांत इति स्मृतः॥ ३६॥ शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः॥ तस्मात्स सर्वशास्त्रज्ञो यस्य शांतं मनः सदा॥ ३७॥ यच्छ्रुतं न विरागाय न धर्माय न शांतये॥ संबद्धमपि शब्देन काकवासितमेव तत्॥ ३८॥ भीष्म उवाच॥ एवं धर्मास्तुलाधारः कथयित्वा तु जाजलिम्॥ ततोऽस्य दर्शयामास समीपस्थाञ्छकुंतकान्॥ ३९॥ तुलाधार उवाच॥ एते शकुंतका विप्र प्रभूता मूर्ध्नि वै तव॥ आह्वयैतान्द्विजश्रेष्ठ त्वमेषां धर्मतः पिता॥ ४०॥ भीष्म उवाच॥ ततो जाजलिना तेन समाहूता विहंगमाः॥ वाचं प्रोचुश्च ते दिव्यां धर्मस्य वचनात्किल॥ ४१॥ शकुंता ऊचुः॥ त्यज स्पर्द्धामिमां ब्रह्मन्विस्मयं च परित्यज॥ शमे मनः समाधत्स्व ततो ज्ञास्यसि तत्परम्॥ ४२॥ सुदुःखार्जितमेतत्ते तपः परमविस्मयात्॥ तपस्यरक्षिते चैव न प्राप्स्यति परा गतिः॥ ४३॥ तद्विस्मयं परित्यज्य तपसः क्षयकारणम्॥ शमे मनः समाधाय ध्यानयोगपरो भव॥ ४४॥ चीरवासा जटी वापि त्रिदंडी मुण्ड एव च॥ वृद्धोऽपि क्लिश्यति ब्रह्मन्नुपशांतं न मानसम्॥ ४५॥ भूषितोऽपि चरेद्धर्मं तत्र

तत्राश्रमे रतः ॥ शमः सर्वेषु भूतेषु न लिंगं धर्मकारणम् ॥ ४६ ॥ वनेऽपि दोषाः प्रभवंति रागिणां गृहेऽपि पंचेंद्रियनिग्रहस्तपः ॥ अकुत्सिते कर्मणि यः प्रवर्त्तते निवृत्तरागस्य गृहं तपोवनम् ॥ ४७ ॥ वयं स्नेहादिह प्राप्तास्तव धर्मविवक्षया ॥ शांतो भव त्यज स्पर्द्धामित्युक्त्वा ते वनं ययुः ॥ ४८ ॥ एवं तैरनुशिष्टो वै तुलाधारेण च द्विजः ॥ शममास्थाय नियतो जगाम परमां गतिम् ॥४९॥ तस्माद्विद्धि महाराज तपसः शममुत्तमम् ॥ तपस्वी स्वर्गमाप्नोति शांतात्मा ब्रह्मणः पदम् ॥५०॥ एतत्ते सर्वमाख्यातं मया तत्वेन भारत ॥ शमे मनः समाधाय ध्यानयोगपरो भव ॥ ५१ ॥ य इदं शृणुयान्नित्यं पुण्यमाख्यानमुत्तमम् ॥ यः पठेत्प्रांजलिर्भूत्वा स गच्छेत्परमां गतिम् ॥ ५२ ॥

इति श्रीमदितिहाससमुच्चये जाजल्युपाख्यानं नाम द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः १३ ।

भीष्म उवाच ॥ मानुष्यं मुनयो वित्तं सर्वमाहुरशाश्वतम् ॥ दैवमाहुस्तथा वित्तं धर्मं दिव्यं सुखप्रदम् ॥ १ ॥ युधिष्ठिर उवाच ॥ केचिदर्थं प्रशंसंति केचिद्धर्मं तथापरे ॥ तयोः कश्चोत्तमो लोके तन्मे ब्रूहि पितामह ॥ २ ॥ भीष्म उवाच ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ कुंडधारेण यत्प्रीत्या भक्त्या चोपकृतः पुरा ॥ ३ ॥ अधनो ब्राह्मणः कश्चिद्धनार्थं लोभमोहितः ॥ देवमाराधयामास न च प्राप धनं क्वचित् ॥ ४ ॥ ततश्चिंतापरो भूत्वा का नु सा देवता भवेत् ॥ या मे शीघ्रं प्रसीदेद्वै मानुषैरजडीकृता ॥ ५ ॥ सोऽथापश्यत्कुण्डधारं देवानुचरमंतिके ॥ तं दृष्ट्वा चिंतयित्वाथ श्रेयोऽयं मे विधास्यति ॥ ६ ॥ सन्निकृष्टश्च देवानां न चान्यैर्मानुषैर्वृतः ॥ एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ॥ ७ ॥ युगकोटिसहस्राणि विष्णु-

माराध्य पद्मभूः ॥ पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥ ८ ॥ तं विष्णुमल्पकालेन प्रसादयितुमुद्यतः ॥ समुद्रं बाहुभिस्तीर्त्वा परं पारं च कांक्षति ॥ ९ ॥ तेनाहमल्पकालेन कुंडधारं यथाविधि ॥ आराधयितुमिच्छामि तत्प्रसादाय सर्वथा ॥१०॥ ततः सुगंधैर्माल्यैश्च धूपैरुच्चावचैरपि ॥ बलिभिश्चोपहारैश्च पूजयामास तं द्विजः ॥ ११ ॥ ततः स्वल्पेन कालेन प्रीतस्तस्मै स कुंडधृक् ॥ तस्योपकारनिरतां वाणीं शांतामुवाच सः ॥ १२ ॥ ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ॥ निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १३ ॥ कीर्त्तनं दर्शनं स्पर्शो भाषणं स्मरणं तथा ॥ कृतघ्नस्य न कार्यं वै श्वपाकसदृशो हि सः ॥१४॥ एवमुक्त्वा तु देवानां समाजमुपगम्य सः ॥ पपात शिरसा भूमौ तेषामेवाग्रतस्तदा ॥ १५ ॥ ततस्तं देववचनान्मणिभद्रो महाद्युतिः ॥ उवाच पतितं भूमौ कुंडधारेच्छसीति किम् ॥१६॥ कुंडधार उवाच ॥ यदि प्रसन्ना देवा मे भक्तस्याराधनेन हि ॥ तस्यानुग्रहमिच्छामि कृतं देवैरहं ततः ॥१७॥ तच्छ्रुत्वा मणिभद्रस्तु पुनर्वचनमब्रवीत् ॥ देवानामेव वचनात्कुंडधारमुपागतम् ॥१८॥ मणिभद्र उवाच ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते कुंडधार सुखी भव ॥ यावद्वरं प्रार्थयसे तावदेव ददाम्यहम् ॥ १९ ॥ विचार्य कुंडधारस्तु मानुष्यं धनमध्रुवम् ॥ ततोऽथ प्रार्थयामास धर्मे बुद्धिं सुदुर्लभाम् ॥२०॥ कुंडधार उवाच ॥ महांतं धनराशिं वा पृथिवीं राज्यमेव वा ॥ भक्ताय नाहमिच्छामि भृशमस्तु स धार्मिकः ॥ २१ ॥ विद्या तपो धनं शौर्यं कुलीनत्वमरोगता ॥ राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्मादवाप्यते ॥ २२ ॥ नार्थाल्लोभान्न च स्नेहान्न क्रोधान्न च मत्सरात् ॥ न कामान्न भयाद्वापि धर्मं प्राज्ञः परित्यजेत् ॥ २३ ॥ यस्तु धर्मं परित्यज्य लोभादर्थान्परीप्सति ॥ स हेमराशिमुत्सृज्य पांसुराशिं जिघृक्षति ॥ २४ ॥ देवता मुनयो नागा गंधर्वा गुह्यकास्तथा ॥ धार्मिकं पूजयंतीह न धनाढ्यं न कामुकम् ॥ २५ ॥

अर्थहीनोऽपि धर्मात्मा स्वर्गं गच्छति मानवः ॥ अर्थवान्धर्महीनस्तु नरकं प्रतिपद्यते ॥ २६ ॥ किमनेन विपन्नस्य यदन्यैः परिभुज्यते ॥ परो धर्मकृतो यस्तु मृतमप्यनुगच्छति ॥ २७ ॥ तस्माद्भक्तस्त्वसौ विप्रो नित्यं धर्मपरायणः ॥ धर्माच्च सिद्धिमाप्नोतु ममैवोऽनुग्रहो मतः ॥ २८ ॥ मणिभद्र उवाच ॥ यदा धर्मफलं राज्यं सुखानि विविधानि च ॥ तत्फलान्येव सोऽश्नातु कायक्लेशविवर्जितः ॥ २९ ॥ भीष्म उवाच ॥ असकृत्प्रोच्यमानोऽपि कुंडधारोऽधनं प्रति ॥ प्रार्थयद्धर्ममेवासौ ततस्तुष्टास्तु देवताः ॥ ३० ॥ प्राहुः स्ता देवताः सर्वास्तस्य चैव द्विजन्मनः ॥ भविष्यति च धर्मात्मा धर्मात्सिद्धिं च यास्यति ॥ ३१ ॥ कुंडधारस्तुतः प्रीतो वरं लब्ध्वा सुदुर्लभम् ॥ चिंतयामास तस्यैव निर्वेदोपायमात्मनः ॥ ३२ ॥ चिंतयित्वा तमाहूय धनचिंतापरिक्षितम् ॥ चीराण्यादाय सूक्ष्माणि चक्रे पार्श्वे द्विजस्य सः ॥ ३३ ॥ स दृष्ट्वा तानि चीराणि पार्श्वस्थानि द्विजोत्तमःनिर्वेदं परमापन्नः प्रोवाचेदं वचस्तदा ॥ ३४ ॥ ब्राह्मण उवाच ॥ अयं नः सुकृतं वेत्ति न चान्यो वेत्ति तादृशम् ॥ तथाप्यनुग्रहं कर्तुमद्य तेन च चिंतितम् ॥ ३५ ॥ तस्मात्पापीयसीं हित्वा धनेच्छां दुःखदायिनीम् ॥ गच्छामि वनमेवाहं परं धर्मं निषेवितुम् ॥ ३६ ॥ अनादृत्य तु यो धर्ममर्थार्थं क्लिश्यते नरः ॥ सागरादिव तृष्णार्त्तो मृगतृष्णां स धावति ॥ ३७ ॥ अभावी न भवत्यर्थो नाशो वै नास्ति भाविनः ॥ एतद्वदंतो विबुधाः क्लिश्यंते दैवमोहिताः ॥ ३८ ॥ यः पुरा कृतवान् धर्मं स चार्थमिह विन्दते ॥ येनासौ न कृतः पूर्वं कुतस्तस्यार्थसंपदः ॥ ३९ ॥ प्रत्याख्यातस्य दैवेन सर्वो व्यर्थः परिश्रमः ॥ तुल्ये साति परिक्लेशे कः प्रदेशस्तपोवने ॥ ४० ॥ अत्यंतविमुखे दैवे व्यर्थे जाते तु पौरुषे ॥ मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ ४१ ॥ साधयिष्ये तथात्मानमुग्रेण तपसा भृशम् ॥ यथा न भूयः कृपणो

यास्यामि क्वचिदर्थितम् ॥ ४२ ॥ यत्किंचित् त्रिषु लोकेषु प्रार्थयंति नरा सुखम् ॥ तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ ४३ ॥ तपसा दिवि देवत्वं देवाः संप्रतिपेदिरे ॥ तपसैव हि संसिद्धिमृषयः परमां गताः ॥ ४४ ॥ भीष्म उवाच ॥ एवमुक्त्वा स चीराणि गृहीत्वा तानि वै द्विजः ॥ वनं प्रविश्य सुमहत्तपस्तेपे सुदुष्करम् ॥ ४५ ॥ पूर्वं मूलफलाहारः पश्चात्पर्णाशनोऽभवत् ॥ त्यक्त्वा च तान्यपि ततो वायुभक्षोऽभवच्चिरम् ॥ ४६ ॥ तस्य धर्मपरस्यासीद्वन्यमूलफलाशिनः ॥ कुंडधारप्रसादेन बुद्धिस्तत्त्वार्थदर्शिनी ॥ ४७ ॥ सोऽचिंतयत्कदाचिन्मे यदि दद्यादयं धनम् ॥ राज्यं च मम संतुष्टः कथं जीवामि दुःखभाक् ॥ ४८ ॥ ततः प्रादुरभूत्तस्य कुंडधारो महामतिः ॥ ज्ञात्वा कृतकृतांतस्य परमार्थविशारदः ॥ ४९ ॥ तं दृष्ट्वा कुंडधारं तु प्रीतात्मा प्रत्यपूजयत् ॥ अथास्य दर्शयामास गतिं राज्ञां सुदुःसहाम् ॥ ५० ॥ पश्य राज्ञां गतिं विप्र त्वं हि प्रार्थितवान्पुरा ॥ नास्मात्कष्टतरं लोके विद्यते कटुकोदयम् ॥ ५१ ॥ ततो राज्ञां सहस्राणि पतंति निरयेऽशुचौ ॥ दूरादपश्यद्विप्रोऽसौ तदा दिव्येन चक्षुषा ॥ ५२ ॥ कुंडधार उवाच ॥ यदि त्वं पूजयित्वा मां प्राप्नुयाद्गतिमीदृशीम् ॥ ततस्तव मया विप्र कः कृतोऽनुग्रहो भवेत् ॥ ५३ ॥ पश्य पश्य च भूयांस्त्वं यैरिदं जगदावृतम् ॥ स्वर्गद्वारं निरुद्धं च समंतादकृतात्मभिः ॥ ५४ ॥ सर्वं एव हि लोकोऽयं यदि स्याद्धर्मतत्परः ॥ ततो निरंतरं स्वर्गो भवेच्छून्या च मेदिनी ॥ ५५ ॥ ततोऽपश्यत्स कामं च क्रोधं लोभं भयं मदम् ॥ निद्रां मत्सरमालस्यं स्थितान्यावृत्य देहिनम् ॥ ५६ ॥ एतैर्लोकाः संनिरुद्धा देवानां मानुषाद्भयात् ॥ देवादेशादमी तस्माद्विघ्नं कुर्वंति देहिनाम् ॥ ५७ ॥ भीष्म उवाच ॥ ततः पपात शिरसा कुंडधाराय स द्विजः ॥ उवाचैनं च सुप्रीतो महान्मेऽनुग्रहः कृतः ॥ ५८ ॥ मनसापि न कांक्षंति यान्कामाननुजीविनः ॥ संपादयंति

तांस्तेषां स्वामिनो भक्तवत्सलाः ॥ ५९ ॥ अर्थलोभाभिभूतेन यन्मया त्वमसूयतः ॥ परां प्रीतिमविज्ञाय तत्सर्वं क्षंतुमर्हसि ॥ ६० ॥ क्षांतमेव मयेत्युक्त्वा कुंडधारो द्विजोत्तमम् ॥ संपरिष्वज्य बाहुभ्यां तत्रैवांतर्दधे नृप ॥ ६१ ॥ ततस्तस्य प्रसादेन देवानां च विशेषतः ॥ धर्मोज्ज्ञानं ततः प्राप्य समलोष्टाश्मकांचनः ॥ ६२ ॥ रागद्वेषादिरहितः सदा ध्यानपरायणः ॥ अचिरेणैव कालेन प्राप्तवान्वैष्णवं पदम् ॥ ६३ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृष्टवान् ॥ धर्मादर्थश्च कामश्च प्राप्यते परमा गतिः ॥६४॥ एतस्माद्धि महाराज चिन्तेद्धर्ममनुत्तमम् ॥ धर्मात्स्वर्गश्च मोक्षश्च प्राप्यते वैष्णवं पदम् ॥ ६५ ॥ इतिहासमिमं पुण्यं प्रातरुत्थाय मानवः ॥ श्रावयेद्धर्मभागी स्यादमृतत्वं च गच्छति ॥ ६६ ॥

इति श्रीमदितिहाससमुच्चये कुंडधारोपाख्यानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः १४ ।

युधिष्ठिर उवाच ॥ ईहमानः समारंभं यदि नासादयेद्धनम् ॥ नरस्तृष्णाभिभूतस्तु पुनः किं सुखमाप्नुयात् ॥ १ ॥ भीष्म उवाच ॥ सर्वसौख्यमनायासः सत्यवाक्यं च भारत ॥ निर्वेदश्च चिकित्सा च यस्य स्यात्स सुखी नरः ॥ २ ॥ एतान्येव पदान्याहुः सर्वतृष्णाप्रशांतये ॥ एवं स्वर्गश्च मोक्षश्च सुखं चानुत्तमं स्मृतम् ॥ ३ ॥ यस्यैतानि पदानि स्युस्तस्यैतत्सचराचरम् ॥ तस्यैतद्विष्णुसालोक्यं तस्य विष्णौ स्थिरा मतिः ॥ ४ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ निर्वेदान्मंकिना गीतं तन्निबोध युधिष्ठिर ॥ ५ ॥ ईहमानो धनं मंकी भग्नेहश्च पुनः पुनः ॥ केनचिद्धनलोभेन क्रीतवान्दम्यगोद्वयम् ॥ ६ ॥ ततस्तौ दम्यमानौ तु तेन दम्यौ सुसंयतौ ॥ आसीनावुष्ट्रमध्ये तु सहसैवाभ्यधावताम् ॥ ७ ॥ अथोष्ट्रस्तूर्णमुत्थाय दम्यावुत्क्षिप्य तौ तदा ॥ काकता-

लीयवीर्येण तस्य दैवविपर्ययात् ॥ ८ ॥ तावुभौ ह्रियमाणौ च तेनोष्ट्रेण बलीयसा ॥ निरीक्ष्य ध्रियमाणौ तु मंकिस्तत्राब्रवीदिदम् ॥ ९ ॥ प्राज्ञेन तु समर्थेन नित्योद्योगपरेण तु ॥ प्राप्तुं न विहितं शक्यं दक्षेणापि धनं क्वचित् ॥ १० ॥ पौरुषे नित्ययुक्तस्य नित्यार्थमनुतिष्ठतः ॥ तस्येष समनुप्राप्तो मम दैवादुपप्लवः ॥ ११ ॥ अन्यथा चिंतिता त्वर्था नरैराशापरायणैः ॥ अन्यथैवेह गच्छंति दैवादिति मतिर्मम ॥ १२ ॥ दुष्करं बत कुर्वंति संतोऽर्थान्वै त्यजंति ये ॥ वयमेतानपि त्यक्तुमसतोऽपि न शक्नुमः ॥ १३ ॥ कृताः कृताः समारंभा भवंति विफला मम ॥ नूनं हि क्लेशभूयिष्ठा सृष्टिरेषा ममेदृशी ॥ १४ ॥ बलवानपि नाप्नोति धनं भाग्यविवर्जितः ॥ दृश्यंतेऽर्थाः सभाग्येषु बालस्त्रीवृद्धरोगिषु ॥ १५ ॥ बालस्त्रीवृद्धरुग्णानां किमैश्वर्येषु पौरुषम् ॥ अज्ञानात् क्लिश्यते लोकः पुण्यैः सर्वमवाप्यते ॥ १६ ॥ न मंत्रबलवीर्येण प्रज्ञया पौरुषेण च ॥ नालभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥१७॥ अथार्थे यानि कर्माणि करोति कृपणो जनः ॥ तान्येव यदि धर्मार्थे कुर्यात्को दुःखभाग्भवेत् ॥१८॥ अर्थानामर्जने दुःखमर्जितानां च रक्षणे ॥ त्यागे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ १९ ॥ यश्चार्थपतिरुद्विग्नो यश्च सर्वार्थनिःस्पृहः ॥ तयोरर्थपतिर्दुःखी सर्वार्थनिस्पृहः सुखी ॥ २० ॥ तस्मात्त्यक्तार्थसंकल्पो यथालब्धेन वर्त्तयन् ॥ नार्थलोभादिहात्मानं क्लेशयिष्याम्यहं पुनः ॥ २१ ॥ तथा मनः समाधाय चरिष्ये धर्ममात्मना ॥ यथा भूयो न जननं प्राप्स्यामि क्लेशभाजनम् ॥ २२ ॥ अहो सम्यक् शुकेनोक्तं मुक्तसंगेन सर्वतः ॥ उत्तिष्ठता तदा राजन्कस्यचिद्द्विजनिवेशनात् ॥ २३ ॥ यः कामान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ॥ प्रायेण सर्वकामानां परित्यागो विशिष्यते ॥ २४ ॥ यदि त्यजति कामांस्तु स सुखेनापि पूर्यते ॥ कामानुसारी पुरुषः कामाननुविनश्यति ॥ २५ ॥ नातः परतरं किंचित्त्रिषु लोकेषु विद्यते ॥

वीतकामस्य तृष्णाभ्यो जायते किल यत्सुखम् ॥ २६ ॥ तत्तस्यैव च मन्यामो महर्षेर्भावितात्मनः ॥ प्रभवं सर्वदुःखानां कामं त्यक्ष्याम्यशेषतः ॥२७॥ कामो बंधनमेवैषां किमन्यद्लोकबंधनम् ॥ कामबंधनमुक्तो हि नेह भूयोऽभिजायते ॥ २८ ॥ काम जानामि ते मूलं संकल्पात्त्वं हि जायसे ॥ न त्वां संकलपयिष्यामि समूलो न भविष्यसि ॥ २९ ॥ नैवं त्वं वेत्सि सुलभं नैवं त्वं वेत्सि दुर्लभम् ॥ पातालमिव दुष्पूरं मां हि क्लेशयसे सदा ॥ ३० ॥ जिते त्वयि जितं सर्वं भवतीति विदुर्बुधाः ॥ तस्मात्त्वामद्य जेष्यामि दुर्जयं शत्रुमात्मनः ॥ ३१ ॥ निर्ममत्वं परं सौख्यमिति ज्ञातं चिरान्मया ॥ दम्भनाशे निराशोऽद्यं शमिष्यामि गतज्वरः ॥ ३२ ॥ क्षमिष्ये क्षम्यमाणानां न हिनस्मि च हिंसकान् ॥ द्वेषमुक्ते प्रियं वक्ष्ये त्वनादृत्य तदप्रियम् ॥३३॥ संतोषमार्जवं क्षांतिस्तपः सत्यं धृतिः शमम् ॥ सर्वभूतदयां चाहमद्यैव शरणं गतः ॥३४॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥ तृष्णासुखक्षयस्यैते षोडशीं नार्हतः कलाम् ॥३५॥ तृष्णे लोकद्वयस्यास्य निर्वेदपरिपंथिनि ॥ येस्त्वं निर्माल्यवत्त्यक्ता तेऽत्यंतसुखिनो नराः ॥ ३६ ॥ त्यक्त्वा कामं भयं क्रोधं लोभं द्रोहं च मत्सरम् ॥ एकं ब्रह्मप्रविष्टोऽहं ग्रीष्मे शीतमिव ह्रदम् ॥ ३७ ॥ त्यक्त्वा च सुखमाप्नोति न त्यक्त्वा विंदते नरः ॥ नात्यक्त्वा निर्भयः शेते सर्वं त्यक्त्वा सुखी भवेत् ॥ ३८ ॥ पापात्मनो निरुत्साहो हृदयाच्च क्षयं गतम् ॥ एतज्ज्ञानं च ध्यानं च शेषान्ये ग्रंथविस्तराः ॥ ३९ ॥ सर्वान्कामान्परित्यज्य संनियम्य मनो हृदि ॥ प्राप्स्यामि परमं ब्रह्म यत्कांक्षंति मुमुक्षवः ॥ ४० ॥ आत्मनः सहजं कामं जित्वा शत्रुमनुत्तमम् ॥ प्राप्स्यामि[1] तत्परं ब्रह्म त्वद्यैवाहं सुखे स्थितः ॥४१॥ भीष्म उवाच ॥ इत्येवं दम्भनाशेन मंकी निर्वेदमाश्रितः ॥ सर्वान्कामान्परित्यज्य ब्रह्म प्राप परं तथा ॥ ४२ ॥

---

१ परस्मैपदमार्षम् ।

विमुंचति यदा कामान्सर्वांश्च हृदि संस्थितान् ॥ तदामृतत्वमाप्नोति पुरुषो नात्र संशयः ॥४३॥ अतीव दुःखं जैतदम्भनाशनं विचिंत्य मंकी विगतार्थसंगतिः ॥ तथैहिकामुष्मिकसंपदावहे चचार धर्मे विषयेषु निःस्पृहः ॥ ४४ ॥ ततश्च धर्मार्जितबोधसाधनं पुरा कृतेनापि विशुद्ध-कर्मणा ॥ जगाम विष्णोः पदमेव तद्ध्रुवं किमस्ति दुष्प्रापमहो महात्म-नाम् ॥ ४५ ॥

इति श्रीमदितिहाससमुच्चये मंक्युपाख्यानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

## पंचदशोऽध्यायः १५।

युधिष्ठिर उवाच ॥ तपसा श्रद्धया वापि दानैर्वापि परंतप ॥ स्वय-मुत्पद्यते ज्ञानं ब्रूहि किंचित्पितामह ॥ १ ॥ भीष्म उवाच ॥ जन्मां-तरसहस्रेषु या बुद्धिः सत्वसंयुता ॥ तया स्वधर्मे तिष्ठंतं ब्रह्म संपद्यते तदा ॥ २ ॥ नहुषो नाम राजर्षिः पूर्वेषां मम पूर्वजः ॥ बोध्यं शांतं च शास्त्रज्ञं पृष्टवानिति शुश्रुम ॥ ३ ॥ युधिष्ठिर उवाच ॥ किमुवाच महाराजः किं जगाद महामतिः ॥ कथं निर्वेदमापन्नस्तन्मे विस्तरतो वद ॥ ४ ॥ भीष्म उवाच ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ बोध्यं शांतमृषिं ज्ञात्वा पप्रच्छ नहुषो यथा ॥ ५ ॥ नहुष उवाच ॥ कां त्वं बुद्धिं समास्थाय लोके चरसि मुक्तवत् ॥ निस्पृहः सर्वकामे-भ्यस्तन्मे ब्रूहि तपोधन ॥ ६ ॥ बोध्य उवाच ॥ पिंगला कुररः सर्पः सारंगोऽन्वेषतो वने ॥ इषुकारः कुमारी च षडेते गुरवो मम ॥ ७ ॥ संकेते पिंगला वेश्या कांतेनाशाविना कृता ॥ साथ कृच्छ्रगता शांता बुद्धिमास्थाय सात्विकीम् ॥ ८ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ आशां निराशां कृत्वा च सुखं स्वपिति पिंगला ॥ ९ ॥ सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः ॥ तदामिषपरित्यागात्कुररः सुखमेधते ॥ १० ॥ गृहारम्भोऽतिदुःखाय न सुखाय कदाचन ॥ सर्पः

परकृतं वेश्म प्रविश्य सुखमेधते ॥ ११ ॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यो मतिमान्नरः ॥ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ १२ ॥ इषुकारो नरः कश्चिदिषौ हि गतमानसः ॥ समीपेनापि गच्छंतं राजानं नावबुध्यत ॥ १३ ॥ बहूनां कलहो नित्यं द्वाभ्यां संकथनं ध्रुवम् ॥ एकाकी विचरेत्तस्मात्कुमार्या इव कंकणः ॥ १४ ॥ इत्येतच्चेष्टितं तेषामनुतिष्ठन्समाहितः ॥ सर्वान्कामान्परित्यज्य विचरामीह मुक्तवत् ॥ १५ ॥ भीष्म उवाच ॥ इत्येतत्कथयित्वा तु पार्थिवेंद्राय स द्विजः ॥ जगाम स्वाश्रमं प्रीतो राजापि स्वपुरं ययौ ॥ १६ ॥ अवेहि राजन्पुरुषार्थकांक्षिणो भवंति लोके गुरवश्च संमताः ॥ तथापि बोध्यो विचरन्यथासुखं समोयिवान् ब्रह्मपदं सनातनम् ॥ १७ ॥

इति श्रीमदितिहाससमुच्चये बोध्यनहुषसंवादोपाख्यानं नाम पंचदशोऽध्यायः॥ १५॥

## षोडशोऽध्यायः १६ ।

युधिष्ठिर उवाच ॥ सर्वेषामेवं लाभानां को लाभः परमो मतः ॥ एतन्मे संशयं विद्वञ्छेत्तुमर्हस्यशेषतः ॥ १ ॥ भीष्म उवाच ॥ प्रज्ञालाभात्परो लाभो न कश्चिदिह विद्यते ॥ प्रज्ञावान् सुखमाप्नोति पुमानिह परत्र च ॥ २ ॥ प्रज्ञया निर्वृतिं प्राप्तो बलिरैश्वर्यसंक्षयात् ॥ प्रह्लादो नमुचिर्मंकी तस्मात्किं विद्यते परम् ॥ ३ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ इंद्रकश्यपसंवादं तन्निबोध युधिष्ठिर ॥ ४ ॥ वैश्यः कश्चिद्रथं यांतं कश्यपं नामतो द्विजम् ॥ रथान्निपातयामास धनैश्वर्यमदान्वितः ॥ ५ ॥ स निःश्वसन्सुदुःखार्तो निर्वेदादिदमब्रवीत् ॥ मरिष्याम्यधनस्येह कोऽप्यर्थो जीवितेन मे ॥ ६ ॥ तं मृत्युकृतसंकल्पं विह्वलं दीनमानसम् ॥ इंद्रः शृगालरूपेण समेत्य प्रत्यबोधयत् ॥ ७ ॥ यदा खमपि ते चेतो नानुकूलं हितं प्रति ॥

परेण प्रतिकूलेन किमर्थं परितप्यसे ॥८॥ आत्मनः प्रतिकूलानि परेभ्यो यदि नेच्छसि ॥ परेभ्यः प्रतिकूलेभ्यो निवर्त्तय ततो मनः ॥९॥ यत्कृतं हि पुरा येन ध्रुवं तदिह सोऽश्नुते ॥ तद्दुःखं स्वकृतं प्राप्तं परितापे कृते नु किम् ॥ १०॥ पीड्यमानो भृशं दुःखैर्वृथा किमनुतप्यसे ॥ सर्व-दुःखौषधं धर्मं मूढ किं न करोषि तम् ॥११॥ धर्मं कर्तुमशक्ता ये तान्हि शोचंति पंडिताः ॥ किंतु धर्मक्रियासक्तो विप्रत्वे किं विमुह्यसि ॥१२॥ मानुष्यं प्राप्यते ब्रह्मन्पुण्यैर्बहुविधैरिह ॥ मानुष्यत्वेऽपि विप्रत्वं तस्माच्छ्रोत्रियता तथा ॥ १३ ॥ तद्भवानुत्तमं लब्ध्वा श्रोत्रियत्वं सुदुर्लभम् ॥ कथं तु निर्धनोऽस्मीति निर्वेदान्मर्तुमिच्छसि ॥ १४॥ अधोऽधोदर्शने कस्य महिमा नोपजायते ॥ उपर्य्युपरि पश्यंतः सर्व एव सुदुःखिताः ॥ १५ ॥ प्रार्थयंति धनं विप्र पुरुषा विषयात्मकाः ॥ धनं च विषयांश्चैव त्यजंति कृतबुद्धयः ॥ १६ ॥ सद्भिर्विगर्हितातीव दुःखदात्री धनस्पृहा ॥ संतुष्टो यः स्वधर्मस्थः सोऽत्यंतं दिवि मोदते ॥१७॥ धनवान्पुरुषो लोके धनं त्यजति तत्कृतम् ॥ अवश्यमेवं त्यागोऽस्ति तस्मात्किं धनतृष्णया ॥ १८ ॥ स्पृहयंति त्वसंतुष्टा धनिनश्च धनानि च ॥ संतोषाक्षयकोशस्य किं धनैर्धनदेन वा ॥ १९ ॥ धनेषु त्यक्तसंगानां यत्सुखं शांतचेतसाम् ॥ कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ २० ॥ अपि चेदम्बुधिनेमिः समस्ता भूर्हि प्राप्यते येन ॥ न स धनेन च तेन तृप्यति तर्हि किं नु धनलाभैः ॥ २१ ॥ मम मित्रमसौ मम पुत्रो मम जननीयमिति प्रवदंतः ॥ सहजातगृहिण्युपसर्गं सर्वमिदं हि जगद्व्यवहारम् ॥ २२ ॥ नार्थं विना भवेद्धर्मो नार्थो धर्मं विना भवेत् ॥ तस्माद्धर्मपराधीने स्पृहामर्थे परित्यज ॥ २३ ॥ अर्थेप्सूनां महद्दुःखमर्थप्राप्तौ ततोऽधिकम् ॥ संजातेष्वपि चार्थेषु विप्रयोगे महत्तरम् ॥२४॥ अर्थोपार्जनसक्तो हि न श्रेयो विंदते नरः ॥ तस्य चार्थागमाः सर्वे मनोमोहविवर्द्धनाः ॥ २५ ॥ राजतः सलिला-

दुग्नेश्चोरतः स्वजनादपि ॥ भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ २६ ॥ यथामिषं जले मत्स्यैर्भक्ष्यते स्वापदे ध्रुवम् ॥ आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥२७॥ दरिद्रः प्रार्थयत्यर्थमर्थवान् राज्यमिच्छति ॥ राजापि पृथिवीशत्वं पृथ्वीशश्चक्रवर्तिताम् ॥ २८ ॥ इंद्रत्वं चक्रवर्ती च तथासौ ब्रह्मणः पदम् ॥ तस्मादपि पुनस्तस्मात्तस्मादपि पुनः पुनः ॥ २९॥ एवं नांतं हि तृष्णाया गताः पूर्वे हि केचन ॥ तस्माद्दुरंतां दुःष्पूरां धनतृष्णामिमां त्यज ॥ ३० ॥ महद्भिरिह संप्राप्तैस्तृष्णा नार्थैः प्रशाम्यति ॥ संप्रज्वलति सा भूयः समिद्भिरिव पावकः ॥ ३१॥ स्वप्नलब्धा यथा लाभा क्षणमेव सुखावहाः ॥ तद्वत्ता हि द्विजश्रेष्ठ नराणामर्थसंपदः ॥३२॥ संपदोऽनिलधूतांबुतरंगक्षणभंगुराः ॥ कस्ता आशीविषावासतरुच्छाया इवाश्रयेत् ॥३३॥ कार्पण्यं मत्सरो दंभः क्रोधस्तृष्णा भयं मदः ॥ अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ ३४ ॥ तदेवं बहुदोषस्य निन्दितस्य मनीषिभिः ॥ अर्थस्यार्थे कथं नाम प्राणांस्त्वं त्यक्तुमर्हसि ॥३५॥ आत्मप्राणपरित्यागं विगर्हंति विपश्चितः ॥ अप्यंत्यजातेः पापस्य किंमुत ब्रह्मवादिनः ॥ ३६ ॥ अज्ञाननिद्रया सुप्तस्त्वं दुःखप्रतिबोधया ॥ चिरं जातोऽसि दुर्बुद्धे प्रतिबुध्यस्व सांप्रतम् ॥३७॥ ब्राह्मण्यं प्राप्यते ब्रह्मंस्तपोभिर्बहुभिर्यतः ॥ तल्लब्ध्वा यदि संसारान्नापक्रामसि संयतः ॥ ३८ ॥ अहो सिद्धार्थता तेषां येषां संतीह पाणयः ॥ पाणिमद्भ्यः स्पृहास्माकं वनाय भवतो यथा ॥ ३९॥ अपाणित्वाद्वयं ब्रह्मन् कंटकान्नोद्धरामहे ॥ जंतूंश्च तुदतो देहं न निषेद्धुं हि शक्नुमः ॥ ४० ॥ तथापि नात्मनः प्राणांस्त्यक्तुमिच्छाम्यहं द्विज ॥ नास्मात्पापतरां योनिं पतिप्राणपरामिह ॥ ४१ ॥ न दंष्ट्रिणः शृगालत्वे न कृमीन्न च मूषकान् ॥ न सर्पान्न च मंडूकान् शक्तो वारयितुं क्वचित् ॥४२॥ पंग्वंधबधिरव्यंगा अनाथा रोगिणस्तथा ॥ मर्तुमिच्छन्ति नो ब्रह्मन्कथंचिदपि ते स्वयम् ॥ अव्यंगस्त्वमरोगश्च

ह्याहा धन्योऽसि काश्यप ॥ ४३ ॥ ततस्तेनैव लाभेन सुदृढां तुष्टि-महर्हसि ॥ किं पुनर्योऽसि सत्वानां सर्वेषामुत्तमो द्विज ॥ ४४ ॥ शृणोषि यदि मे ब्रह्मन्भावितं श्रद्दधासि च ॥ ततो यतस्व धर्मार्थमात्मानं त्यक्तुमर्हसि ॥ ४५ ॥ धर्ममाचर ते वृत्तिर्यदि नोपगमिष्यति ॥ न हि नाम शिलोंछानि शाकमप्युपपत्स्यते ॥ ४६ ॥ जीवतः शिलवृत्त्यापि धर्मो यस्य न सीदति ॥ अरण्ये वसतो नित्यं धर्मवित्ता हि साधवः ॥ ४७ ॥ स्वाध्यायमग्निसंस्कारं ब्रह्मचर्यं शमं तपः ॥ अस्तेयमनसूयां च क्षमां चैवानुपालय ॥ ४८ ॥ असंतोषं तथा हिंसामसत्यं चाप्यनार्जवम् ॥ नास्तिक्यं मानमिच्छां च विषयांश्च परित्यज ॥ ४९ ॥ विषयासक्तचित्तानां धनं बहुमतं नृणाम् ॥ निवृत्तविषयेच्छानां किं धनेन मनीषिणाम् ॥ ५० ॥ परित्यक्तुं न शक्नोति विषयान्विषयात्मकः ॥ त्यज तेषु ततः संगं भव चाध्यात्मिको वरः ॥ ५१ ॥ न हि खल्वप्यसंगस्य कामुकत्वं विजायते ॥ दर्शनात्स्पर्शनात्कापि श्रवणाच्च प्रजायते ॥ ५२ ॥ तत्त्वं स्मरसि तारुण्यात्षट्पदानां च पक्षिणाम् ॥ तेभ्यश्चाभ्यधिको भिक्षुर्न कश्चिदिह विद्यते ॥ ५३ ॥ यानि यान्यतिदूरेषु भक्ष्यभोज्यानि केवलम् ॥ तेषामभुक्तपूर्वत्वान्नित्यमस्मृतिरेव च ॥ ५४ ॥ अदर्शनैरपघ्राणैरस्पर्शश्रवणैस्तथा ॥ विरागमेति पुरुषः शांतिमेति तथा पुनः ॥ ५५ ॥ यतो यतो निवर्तेत ततस्ततो हि विमुच्यते ॥ निवर्तनाद्धि सर्वत्र परं सुखमुपाश्नुते ॥ ५६ ॥ तस्मात्त्वं विषयांस्त्यक्त्वा विषमांश्च सुदुर्गमान् ॥ हृदि कृत्वेन्द्रियग्रामं शकुंतानिव पंजरे ॥ ५७ ॥ इंद्रियैर्निहितैर्देही क्षीराब्धिरिव तिष्ठति ॥ लोकेषु चिरमात्मानं लोकान्पश्यति चात्मनि ॥ ५८ ॥ इंद्रियाणि समस्तानि नियच्छ मनसा हृदि ॥ मनो बुद्धौ समाधत्स्व बुद्धिं च परमात्मनि ॥ ५९ ॥ एवं बुद्धिं समास्थाय परमात्मनि निश्चलाम् ॥ क्षिप्रं यास्यसि निर्वाणं निरिंधन इवानलः ॥ ६० ॥ अथ चैनं न शक्नोषि परमात्मानमच्युतम् ॥ साकारं

वा निराकारं यथारुचि तमात्मनः ॥ ६१ ॥ नारायणं जगद्योनिं सर्वलोकमहेश्वरम् ॥ ये चिंतयंति मनसा न तेषां विद्यते भयम् ॥ ६२ ॥ भीष्म उवाच ॥ श्रुत्वैतत्स द्विजः सर्वं शृगालं प्राह विस्मितः ॥ विष्णुर्महेंद्रो रुद्रो वा ब्रूहि कस्त्वं महामते ॥६३॥ शृगाल उवाच ॥ इंद्रोऽहमिह संप्राप्तो विप्रानुग्रहकाम्यया ॥ त्यक्त्वा लोभं तदुत्तिष्ठ चर धर्ममनुत्तमम् ॥ ६४ ॥ भीष्म उवाच ॥ एवं समनुशास्येंद्रस्तं द्विजं त्रिदिवं गतः ॥ कश्यपोऽपि तथोक्तं तु कृत्वा मुक्तिमवाप्तवान् ॥ ६५ ॥ तस्माच्च सर्वलाभानां प्रज्ञालाभः परो मतः ॥ प्रज्ञावान्सुखमाप्नोति पुमानिह परत्र च ॥ ६६ ॥ प्रज्ञामूलमिदं सर्वं दृष्टादृष्टविचेष्टितम् ॥ तस्मादुभयासिद्ध्यर्थं कुर्वन्प्राज्ञो विशिष्यते ॥ ६७ ॥ सनातनं गुणरहितं निरंजनं नमामि तं त्रिभुवनलोकनायकम् ॥ पुनर्भवव्यसनभयापहं सदा निराकुलं सकलदमव्ययं हरिम् ॥ ६८ ॥ पराभवव्यथितमहार्थनिश्चयं प्रबोधयन्भुवि पतितं द्विजोत्तमम् ॥ शृगालतामुपगतवान्पुरंदरो महात्मनां भवति महाननुग्रहः ॥ ६९ ॥

इति श्रीमदितिहाससमुच्चय इन्द्रकश्यपसंवादोपाख्यानं नाम षोडशोऽध्यायः॥ १६॥

## सप्तदशोऽध्यायः १७।

युधिष्ठिर उवाच ॥ अतिक्रामति कालेऽस्मिन्सर्वभूतक्षयावहे ॥ किं कर्त्तव्यं परं श्रेयस्तन्नो ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ सर्वभूतदयालुत्वं सर्वेन्द्रियविनिग्रहः ॥ सदा श्रेयसि बुद्धिश्च श्रियः परमिदं स्मृतम् ॥ २ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ पितुः पुत्रेण संवादं तन्निबोध युधिष्ठिर ॥ ३ ॥ द्विजातेः कस्यचित्पुत्रो मेधावी नामतोऽभवत् ॥ सोऽब्रवीत्पितरं प्राज्ञः स्वाध्यायाध्ययने रतम् ॥ ४ ॥ पुत्र उवाच ॥ धीरः किंचित्तात कुर्याच्छुभार्थं क्षिप्रं चायुः क्षीयते

मानवानाम् ॥ पितः समाचक्ष्व मम त्वमाशु यथा परं धर्ममहं चरेयम् ॥ ५ ॥ पितोवाच ॥ अधीत्य वेदान्ब्रह्मचर्येण पुत्र पुत्रानिच्छन्पावनार्थं पितॄणाम् ॥ अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याशु मुनिर्बभूव ॥६॥ पुत्र उवाच ॥ मृत्युनाभ्याहते लोके जरया परिपीडिते ॥ व्याधिभिर्ग्रस्यमाने च किं स्वस्थ इव भाषसे ॥७॥ रात्र्यां रात्र्यामतीतायामायुरल्पतरं यदि ॥ गाधोदकस्थमत्स्यस्य धृतिं विंदेद्बुधः कथम् ॥ ८ ॥ सर्वोपायैर्यदा नास्ति मर्त्तव्यस्य प्रतिक्रिया ॥ सोऽहं कथं प्रतीक्षिष्ये जालेनैवावृतश्चिरम् ॥९॥ कुतो न खलु दीर्घत्वमायुषस्तात देहिनाम् ॥ आदित्यरथवेगेन क्षीयते हि प्रतिक्षणम् ॥ १० ॥ प्रतिक्षणमयं कालः क्षीयमाणेन लक्ष्यते ॥ आमकुंभ इवांभस्थो विशीर्णः सन्विभाव्यते ॥ ११ ॥ अश्वत्थचलपत्राग्रलीनतोय इव स्थिते ॥ स्थिराशा जीविते यस्य तत्तुल्यो नास्त्यचेतनः ॥१२॥ जातमेवांतकोऽन्वेति जरा चान्वेति देहिनम् ॥ अनुषक्तावुभौ तात दृष्टौ जगति सम्प्रति ॥१३ ॥ दूरस्थमेति भावित्वाद्विनाशं यात्युपस्थितम् ॥ अयमेति हि कालो यः पूर्वमासीदनागतः ॥ १४ ॥ आसन्नतरतां याति मृत्युर्जंतोर्दिने दिने प्रक्षीणायुष एवेह बध्यस्येव पदे पदे ॥ १५ ॥ उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ॥ मरणं व्याधिशोकादि किमद्य निपतिष्यति ॥ १६ ॥ न तं पश्यामि लोकेऽस्मिन्यो जातो न मरिष्यति ॥ इति संचिन्तयन्बुद्ध्या स्वस्थो जातु च ना भवेत् ॥१७॥ न व्याधयो न च यमः श्रेयः प्राप्तं प्रतीक्षते ॥ यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत् ॥ १८ ॥ बाल एव चरेद्धर्ममनित्यं खलु जीवितम् ॥ फलानामिव पक्कानां शश्वत्पतनतो भयम् ॥ १९ ॥ युवत्वापेक्षया बालो वृद्धत्वापेक्षया युवा ॥ मृत्योरुत्संगमारूढः स्थविरः किमपेक्षते ॥२०॥ धर्मं परिहरन्मन्द आत्मानं परिपालयेत् ॥ वर्षासु

१ मातरिति शेषः।

जीर्णंध इव तिष्ठन्नेवावसीदति ॥ २१ ॥ व्रजंति न निवर्तंते तोयानि सरितामिव ॥ आयुरादाय मर्त्यानां रात्र्योऽहानि पुनः पुनः ॥ २२ ॥ अहोरात्राणि मासाश्च क्षणाः काष्ठाः कला लवाः ॥ संपीडयंति वृद्धं हि काष्ठं वै वार्षिका यथा ॥ २३ ॥ यथागारं दृढं स्थूणे जीर्णे भिन्ने च सीदति ॥ तथा च सीदंति नराः कालस्य वशमागताः ॥ २४ ॥ कालस्य वशमायांति विवशाः सर्वदेहिनः ॥ न चैवमवगच्छंति विषयासक्तचेतसः ॥ २५ ॥ अतीते दिवसे यस्मिन्न किंचिच्छुभमाचरेत् ॥ तमेव वंध्यं दिवसमिति विद्याद्विचक्षणः ॥ २६ ॥ भार्या मे पुत्रो मे विभवो मे बांधवाः स्युस्तथा सुहृदः ॥ एवं वदंतमेनं पशुमिव मृत्युर्नरं नयति ॥ २७ ॥ मृत्युरोगजराशोकान्वीक्षमाणः प्रतिक्षणम् ॥ अजरामरवत्तात कथं तिष्ठति निर्भयः ॥ २८ ॥ अद्यैवासौ मया दृष्टो हा कष्टं स कथं गतः ॥ मृत्युना ह्रियमाणानां प्रलापः श्रूयते नृणाम् ॥ २९ ॥ का जानीते कदा कस्य मृत्युः कालो भविष्यति ॥ युवैव धर्मशीलः स्याद्यतोऽनित्यं हि जीवितम् ॥ ३० ॥ जीवितं मरणांतं हि जरांतं रूपयौवनम् ॥ संपदश्च विनाशान्ता जानन्को धृतिमाप्नुयात् ॥ ३१ ॥ यस्य वा मृत्युना सख्यं यो वा स्यादजरामरः ॥ तस्येदं युज्यते वक्तुमिदं श्वो मे भविष्यति ॥ ३२ ॥ इदं श्वो नेदमद्योति नैतन्मर्त्यस्य युज्यते ॥ अवश्यंभविता हि श्वो न तस्मिन् भविता भवान् ॥ ३३ ॥ न कश्चिदपि जानीते किं कस्य श्वो भविष्यति ॥ तस्माच्छ्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥ ३४ ॥ श्वकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥ नहि प्रतीक्ष्यते मृत्युः कृतं वाप्यथवाकृतम् ॥ एवं विचिंत्य यः कुर्यात्स कृतार्थो भवेन्नरः ॥ ३५ ॥ इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ॥ एवमीहासमायुक्तं कृतांतः कुरुते वशम् ॥३६॥ मोहनं हि समायुक्तः पुत्रदारार्थमुद्यतः ॥ कृत्वा कार्यमकार्यं वा पुष्टिमेषां प्रयच्छति ॥३७॥ तं पुत्रपशुमित्रार्थे संसक्तमनसं नरम् ॥ व्याघ्रः पशु-

मिवारण्ये मृत्युरादाय खादति ॥ ३८ ॥ मस्तकस्थायिनं मृत्युं यद्‌पश्यदयं जनः ॥ आहारोऽपि न रोचेत कामतः कार्यकारिता ॥ ३९ ॥ स्नेहपाशैर्बहुविधैराबद्धमनसो नराः ॥ अकृतार्थाश्च सीदंति सिकतासेतवो यथा ॥ ४० ॥ अपर्यंतस्य कालस्य किं तस्य शरदां शतम् ॥ तन्मात्रपरमायुर्यैः कथं स्वस्थः स तिष्ठति ॥ ४१ ॥ शतवर्षं षोडशाब्दं जीवेद्विंशतिमेव वा ॥ सर्वे वर्षशतादूर्ध्वं न भविष्यंति मानवाः ॥ ४२ ॥ संपदः स्वप्नसंकाशा यौवनं स्वप्नकौतुकम् ॥ सुखं खपुष्पसंकाशं शश्वदेतद्विचारयेत् ॥ ४३ ॥ जरान्ते दुःखदा चैव दारे रतिनिराकृतिः ॥ भोगे रोगभयं नृणामाशापाशयितात्मनाम् ॥ ४४ ॥ तडिच्चंचलमायुश्च कस्य स्याज्जानतो धृतिः ॥ किमनेन करिष्यामो जरामरणभीरुणा ॥४५॥ अध्रुवेण शरीरेण मृत्युच्छंदानुवर्त्तिना ॥ तृणानिलनदीवेगस्वप्नसंकाशवृत्तिषु ॥ ४६ ॥ आयुर्यौवनभोगेषु प्राज्ञः को नाम विश्वसेत् ॥ विश्वासमिह कः कुर्याद्भोगायुर्यौवनादिषु ॥४७॥ दृष्ट्वानाथमिवाक्रंदद्भ्रियमाणमिदं जगत् ॥ इदं हि मरणावर्त्ते संसाराब्धौ निराश्रये ॥४८॥ जगन्न स्थानमाप्नोति भ्राम्यमाणं स्वकर्मभिः ॥ ४९ ॥ इदमेव करिष्यामि तत एतद्भविष्यति ॥ संकल्पः क्रियते योऽयं न तं मृत्युः प्रतीक्षते ॥५०॥ अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ॥ न तं पश्यामि यस्याहं तं न पश्यामि यो मम ॥५१॥ एकः प्रसूयते जंतुरेक एव प्रलीयते ॥ एको हि भुंक्ते सुकृतमेकश्चान्योऽतिदुष्कृतम् ॥ ५२ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ॥ विमुखा बांधवा यांति धर्मस्तमनुगच्छति ॥५३॥ बलिनो मृत्युसिंहस्य संसारवनचारिणः ॥ शृण्वन्व्याधिजरानादं कथं तिष्ठसि निर्भयः ॥ ५४ ॥ सपुत्रदारभृत्यस्य सपशुद्रविणस्य च ॥ कियंतो दिवसास्तात यास्यंति कुशलेन ते ॥५५॥ यावन्न गृह्यसे रोगैर्यावन्नाभ्येति ते जरा ॥ यावन्न क्षीयते त्वायुस्तावच्छ्रेयः समाचर ॥ ५६ ॥ पुत्रदारकुटुंबेषु सक्ताः सीदंति जंतवः ॥

सरःपंकार्णवे भग्ना जीर्णा वनगजा इव ॥ ५७ ॥ लोहदारुमयैः पाशै-र्दृढबद्धो विमुच्यते ॥ पुत्रदारमयैः पाशैः पुमान्बद्धो न मुच्यते ॥ ५८ ॥ न च तेषु प्रकर्त्तव्या कर्त्तव्या बुद्धिरीदृशी ॥ कथं नु कृपणा ह्येते वर्ति-ष्यंते मया विना ॥ ५९ ॥ संगत्या जठरे व्यस्तं रेतोबिंदुमचेतनम् ॥ कथं यत्नेन जीवंतं गर्भं तमिह पश्यसि ॥ ६० ॥ अन्नपानानि जीर्यंते यत्र भक्ष्यांश्च भक्षिताः ॥ तस्मिन्नेवोदरे गर्भः किं नाम न तु जीर्यते ॥६१॥ यो गर्भं योजयत्यन्नं यश्च संवर्द्धयत्यपि ॥ तदेवास्य कृतं कर्म सुखदुः-खोपपादने ॥ ६२ ॥ स्वयं मृत्पिंडभूतस्य परतंत्रस्य सर्वदा ॥ स्वरक्ष-णेऽप्रसक्तस्य को हेतुश्चान्यरक्षणे ॥ स्वकृतैर्जीयते जंतुः स्वकृ-तैश्च विवर्द्धते ॥ ६३ ॥ सुखदुःखे तथा मर्त्यः स्वकृते एव विंदते ॥ क्वाहं कुत्र गमिष्यामि कस्याहं किमिहागतः ॥ को बंधुर्मम कश्चाहमि-त्यात्मानं विचिंतय ॥ ६४ ॥ न बंधुरस्ति ते कश्चिन्न त्वं बंधुश्च कस्यचित् ॥ पथि संगतमेवेदं दारा बंधुसुहृज्जनाः ॥ ६५॥ पुरासीत्स्व-जनस्तेऽन्य सांप्रतं वर्ततेऽपरः ॥ देहांते भवितान्यस्य तस्माच्च परतोऽ-परः ॥ ६६ ॥ एवं व्यवस्थिते लोके कः कस्य स्वजनो जनः ॥ को वा परजनः कस्य मोह एव च केवलम् ॥ ६७ ॥ पुत्रदारार्थमनिशं मोहजैः कर्मतंतुभिः ॥ कोशकार इवात्मानं चेष्टयन्नावबुध्यसे ॥ ६८ ॥ दह्यमानेऽपि लोकेऽस्मिन् महता कालवह्निना ॥ को लभेत धृतिं प्राज्ञः प्रदीप्त इव वेश्मनि ॥ ६९ ॥ किं ते धनैर्वा किं दारैः किं पुत्रैर्वा तथा द्विज ॥ सर्वमेतद्यतोऽवश्यं मृत्युग्रस्तं प्रजायते ॥ ७० ॥ न माता न पिता कश्चित्कस्यचिच्चोपपद्यते ॥ दानमध्ययनं जंतुः स्वकर्मफलम-श्नुते ॥ ७१ ॥ बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ अपक्रामति नो कश्चिज्जरां मृत्युं च मानवः ॥ ७२ ॥ अपि सागरपर्यंतां विजित्येमां वसुंधराम् ॥ मृत्युं नैव विजेष्यंतं कः पुमान्धृतिमान्भवेत् ॥ ७३ ॥

---

१ भक्ष्याणि भक्षितानीति लोके ।

स्वकर्मफलविक्षेपं विधात्रा विधिनिर्मितम् ॥ भूतग्राममिमं कालः समंतादपकर्षति ॥ ७४ ॥ हा तात हा स्वकांतेति क्रंदन्नेव सुदुःखितः ॥ मंडूक इव सर्पेण मृत्युना ग्रस्यते जनः ॥ ७५ ॥ अस्मिन् संसारविपिने लोभमोहद्रुमावृते ॥ जरामृत्यू हि भूतानां खादितारौ वृकाविव ॥ ७६ ॥ त्यजतो नैवमत्यंतं पक्षयोः शुक्लकृष्णयोः ॥ जातं मृत्युर्जरयति निर्मितं नातिवर्तते ॥ ७७ ॥ निमेषादिरयं कालः शीघ्रगः सर्वदेहिनाम् ॥ हरत्यायुर्द्विजश्रेष्ठ नदीवेग इव प्लवम् ॥ ७८ ॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति ॥ तस्माद्देहेष्वनित्येषु यन्नित्यं तत्समाचर ॥७९॥ अनित्ये सति मानुष्ये विद्युदालोलचंचले ॥ ये रमंते नमस्तेभ्यः साहसं किमतः परम् ॥ ८० ॥ अतः परं किमन्यत्ते कथयामि पुनः पुनः ॥ अनित्यं सर्वमेवेदं यत्किंचिदिह पश्यसि ॥ ८१ ॥ तदीदृशमिति ज्ञात्वा सर्वभोगेष्वनित्यताम् ॥ सर्वारंभान्परित्यज्य भविष्यस्यात्मयोगवित् ॥ ८२॥ आत्मज्ञानमधीयानो यजन्नात्मानमात्मना ॥ आत्मप्रज्ञो भविष्यामि न मां तारयति प्रजा ॥ ८३ ॥ पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ॥ अंतवद्भिः कृतैः प्राज्ञः कथं न स्यात्पिशाचवत् ॥ ८४ ॥ सोऽहं ह्यहिंस्रः सत्यात्मा कामक्रोधविवर्जितः ॥ जितेंद्रियः समो भूत्वा मृत्युं जेष्याम्यमर्त्यवत् ॥ ८५ ॥ अंतर्बहिश्च यत्किंचिन्मनोव्यासंगकारकम् ॥ तत्सर्वं संपरित्यज्य ध्याने धास्ये मनः सदा ॥ ८६ ॥ मनसश्चेंद्रियाणां वै कृत्वैकत्वं समाहितः ॥ तावत्स्थास्यामि नियतो यावत्त्यक्ष्ये कलेवरम् ॥ ८७ ॥ विमुक्तविषयासंगं संनिरुध्य मनो हृदि ॥ यदा यात्युन्मनोभावं तदा निर्वाणमृच्छति ॥८८॥ कामक्रोधभयेनेह तमसा हतचेतसः ॥ पिशुनाश्च कृतघ्नाश्च नास्तिका भिन्नवृत्तयः ॥८९॥ एतन्मूढा न पश्यंति मोक्षद्वारमपावृतम् ॥

---

१ त्यदादिषु—इति सूत्रस्थचशब्दबलादत्र क्विन्यम् । क्विन् ङीपीदृशीमिति जायेत ।

अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ९० ॥ ध्यानयज्ञजकर्माणि कलां नार्हंति षोडशीम् ॥ भीष्म उवाच ॥ पुत्रस्येदं वचः श्रुत्वा मोक्षधर्मविदस्तदा ॥ तथा स कृतवान्विप्रो यथा सोऽप्यवदत्सुतः ॥९१ ॥ सशंखचक्रं रविमंडले स्थितं कुशेशयाक्रांतमनंतमच्युतम् ॥ जगाम बुद्ध्या तपनीयरूपिणं द्विजोत्तमश्चित्रविभूषणोज्ज्वलम् ॥ ९२ ॥

इति श्रीमदितिहाससमुच्चये पितृपुत्रसंवादोपाख्यानं नाम सप्तदशोऽध्यायः ॥१७॥

## अष्टादशोऽध्यायः १८ ।

युधिष्ठिर उवाच ॥ कथं निर्वेदमापन्नः शुको वैयासकिः पुरा ॥ एतन्मे पृच्छतः सर्वं त्वमाचक्ष्व पितामह ॥ १ ॥ भीष्म उवाच ॥ प्राक्तनेन सुवृत्तेन चरंतमकुतोभयम् ॥ स्वाध्यायाभ्यासरहितं पुत्रं व्यासोऽब्रवीत्तदा ॥ २ ॥ व्यास उवाच ॥ धर्मं पुत्र निषेवस्व शुचौ देशे वसन्सदा ॥ हिमातपौ क्षुत्पिपासे कामं त्यज जितेंद्रियः ॥ ३ ॥ धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ॥ न तत्सेवेत मेधावी न हि यद्धितमुच्यते ॥ ४ ॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ॥ शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ५ ॥ नामुत्र च सहाय्यार्थे पिता माता च तिष्ठतः ॥ न पुत्रदारा न ज्ञातिर्धर्मस्त्ववति केवलम् ॥ ६ ॥ धर्मं हि येऽभ्यसूयंति बुद्धिमोहान्विता नराः ॥ अपथं गच्छतां तेषामनुपातः पदे पदे ॥ ७ ॥ शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः ॥ श्रुतवानपि मूर्खश्च यो धर्मविमुखो नरः ॥ ८ ॥ कुलत्था इव धान्येषु पुत्तिका इव पक्षिषु ॥ तादृशास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ९ ॥ धर्मो माता पिता चैव धर्मो बंधुः सुहृत्तथा ॥ धर्मः स्वर्गस्य सोपानं धर्मात्स्वर्गमवाप्नुयात् ॥ १० ॥ धर्मं चिंतयमानोऽपि यदि प्राणैर्वियुज्यते ॥ ततः

स्वर्गमवाप्नोति धर्मस्यैतत्फलं स्मृतम् ॥ ११ ॥ यश्च विष्णुपरो धर्मो यो वा नारायणे रतः ॥ येन विष्णुरमेयात्मा प्रसादमधिगच्छति ॥१२॥ स एव परमो धर्मो मम विष्णोः परायणम् ॥ तेन सर्वमिदं पुत्र ध्यायते सचराचरम् ॥ १३ ॥ स चिन्तितश्चाप्यनुमोदितश्च दृष्टः श्रुतः संकथितः श्रुतो वा ॥ सर्वाणि पापान्यपहंति धर्मो निशातमांसीव सहस्ररश्मिः ॥ १४ ॥ तस्मात्सर्वात्मना तात सर्वथा धर्ममाचर ॥ यो धर्मविमुखः प्रेत्य तमस्यंधे पतिष्यति ॥ १५ ॥ ये संतुष्टाः श्रुतोपेताः सत्यार्जवदयापराः ॥ जितेन्द्रिया जितक्रोधास्तानुपास्य च पृच्छ च ॥ १६ ॥ अवधार्य मतं तेषां दांतानां धर्मशालिनाम् ॥ नियच्छ परया बुद्ध्या मन उत्पथगामि ते ॥ १७ ॥ मनो हि सर्वभूतानां संचिनोति शुभाशुभम् ॥ अशुभेभ्यस्तदाक्षिप्य शुभेष्वेवावधारय ॥ १८ ॥ कामं क्रोधं भयं लोभं दंभ मोहं मदं तथा ॥ निद्रां मत्सरमालस्यं नास्तिक्यं च परित्यज ॥ १९ ॥ सत्यमार्जवमस्तेयमानृशंस्यं परंतप ॥ ब्रह्मचर्यमहिंसां च क्षमां चैवानुपालय ॥ २० ॥ सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ॥ तथात्मानं समाधत्स्व भ्रश्यंतमपुनर्भवम् ॥ २१ ॥ क्रोधलोभपरो नित्यं निद्रालस्यपरस्तथा ॥ विषयेच्छापरश्चैव श्रेयसो भ्रश्यते द्विजः ॥ २२ ॥ यथा यथा निषेवंते विषयान्विषयात्मकाः ॥ तथा तथा कुशलता तेषां तेषूपजायते ॥२३॥ ते मूढा हारिभिर्नित्यं विषयैर्हृतचेतसः ॥ संप्राप्नुवन्ति दुःखानि यौनभूतासु योनिषु ॥ २४ ॥ विषयेषु प्रसक्तो हि नरः किल्बिषमश्नुते ॥ तस्मात्सर्वात्मना पुत्र[1] विषयान्विषवत्त्यज ॥२५॥ जन्मांतरशतात्त्यक्ता विषयेषु मतिर्नृणाम् ॥ दुष्टा गौरिव शस्येभ्यो दुःखेन विनिवार्यते ॥ २६ ॥ निवर्त्य विषयासक्तिरिंद्रियाणां प्रमाथिनीम् ॥ देवतातिथिशेषेण यात्रां प्राणस्य पारय ॥ २७ ॥ ब्राह्मणस्य च देहोऽयं नोपभोगाय

---

१ 'पुत्र' इति सम्बोधनं शुकस्य।

जायते ॥ इह क्लेशाय महते प्रेत्यानंतसुखाय च ॥ २८ ॥ प्रशस्तानि निषेवस्व स्वकर्माणि प्रयत्नतः ॥ एतावद्धर्मसर्वस्वं निंदितानि विनिर्जय ॥ २९॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ॥ यथोक्तकारिणः सर्वे गच्छंति परमां गतिम् ॥३०॥ शुचिस्तपंस्यः[1] संतुष्टः सुधीः सत्यो जितेंद्रियः ॥ दाता दांतो दयावांश्च ब्राह्मणो नावसीदति ॥ ३१ ॥ मया प्रदर्शितः पंथा एष धर्मस्य पुत्रक ॥ अप्रमत्तो विजानीहि मा गमस्त्वं कुवर्त्मनि ॥ ३२ ॥ इहैव नरकव्याधेश्चिकित्सां न करोति यः ॥ गत्वा निरौषधं स्थानं सरुजः किं करिष्यति ॥ ३३ ॥ पारुष्यमनृतं हिंसां परस्वं परयोषितः ॥ पैशून्यं लोकवार्त्तां च पापशिक्षां च वर्जय ॥ ३४ ॥ यो न साधयते धर्मं कामक्रोधौ तदाश्रयौ ॥ महामोहविमूढेन तेनात्मा वंचितो ध्रुवम् ॥३५॥ न तां वाचं वदेत्प्राज्ञः परलोकविरोधिनीम् ॥ परलोकहितं तात शश्वदुत्थाय चिंतय ॥ इह ते कर्मणामेव विपाकश्चिंतयिष्यति ॥३६॥ पूर्वे वयसि यो धर्मं न करोत्यपवित्रधीः ॥ स पश्चात्तप्यते सुप्तो भ्रष्टसार्थ इवाध्वगः॥३७॥ ग्रामे वा नगरे वापि तीर्थेष्वायतने तथा ॥ न पुत्र तत्र वस्तव्यं यत्राधर्मपरो जनः ॥३८॥ अप्रमत्तेन सततं धर्मः कार्यो विजानता ॥ सद्य आमरणे प्राप्ते धर्मः कर्तुं न शक्यते॥ ३९ ॥ अद्यैव कुरु तच्छ्रेयो मा स्म कालो ह्यगादयम् ॥ अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ॥ ४० ॥ जरां व्याधिं च मृत्युं च को हि जानन्नचेतनः ॥ स्वस्थस्तिष्ठेन्निषीदेच्च स्वयं कालः पुनर्वसेत् ॥४१॥ जन्मव्याधिजरादुःखवेदनाभिरुपद्रुतः॥ समुद्रमिव दुष्पारं संसारं त्यज पुत्रक ॥ ४२ ॥ भूतजीवितमत्यल्पं निद्रा तस्यार्द्धहारिणी ॥ बाल्यशोकजरादुःखैरलं तदपि निष्फलम् ॥ ४३ ॥ श्रयंते[2] जन्मने मूढा जायंते मरणाय च ॥ न धर्माय न

---

१ तपश्चरति इति विग्रहे पचाद्यच्। 'तपस्वी' इति पाठे तु न कश्चिद्विवादः। 'तपस्सहस्राभ्याम्' इति तंत्र निः। २ अदसहितः पाठ आर्षः।

मोक्षाय तृणानीवेतरे जनाः॥ ४४ ॥ कुलं जातिर्वयो रूपं हृतं पश्यामि मृत्युना ॥ न च नामास्ति ते त्रासो लोहं तु हृदयं तव ॥ ४५ ॥ आशासानामिदं पुंसां मृत्युराशु प्रवर्तते ॥ तोयफेनोपमे देहे जीवे शकुनिवत्स्थिते ॥ ४६ ॥ अनित्ये प्रियसंवासे सुखं स्वपिति पुत्रक ॥ ४७ ॥ अहितेन हितज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः ॥ अनर्थं चार्थसंज्ञानं स्वधर्मं नाववुध्यसे ॥४८॥ पुत्रदारकुटुंबानि शरीरं संचयाश्च ये ॥४९॥ परेषामध्रुवं सर्वं स्वांतं सुकृतदुष्कृते ॥ ५० ॥ सुखदुःखानि भूताना-मजरो जरयन्नसौ ॥ आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ ५१ ॥ तृष्णासूचिविनिर्भिन्नं सिक्तं विषयसर्पिषा ॥ रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ ५२ ॥ जगन्ति वनखण्डानि जातैर्जातै-र्दिनच्छलैः ॥ आयुर्धैश्छिद्यमानानि मृत्युना किं न पश्यसि ॥ ५३ ॥ बहुकृत्ये निरुद्योगो जागर्तव्ये प्रसुप्तकः ॥ विश्वस्तः को भयस्थाने हा पुत्रक विहन्यसे ॥ ५४ ॥ अविश्राम्यमनालंब्यमपाथेयमदेशिकम् ॥ तमःकांतारमध्वानं कथमेको गमिष्यसि ॥ ५५ ॥ सत्याधारस्तपस्तैलो दयावर्तिः क्षमाशिखः ॥ नान्धकारः प्रवेष्टव्यो दीपोऽयं चेन्न धार्यते ॥ ५६ ॥ यदि सर्वं परित्यज्य गंतुकामो वनं न चेत् ॥ स कथं धृतिमा-प्नोति मृगः पाशैरिवावृतः ॥५७॥ मृत्युर्जरा च रोगाश्च दुःखानि विवि-धानि च ॥ अनुषक्तानि ते देहे स्वस्थः किमनुतिष्ठसे ॥ ५८ ॥ तिष्ठंतं च शयानं च मृत्युरन्वेषते सदा ॥ निर्वृतिं लभसे कस्माज्जाला-न्मीन इवोद्धृतः ॥५९॥ रागदर्शितपंथानं प्रचंडव्याधिसैनिकम् ॥मृत्यु-शत्रुमभिप्रेप्सुमायांतं किं न पश्यसि ॥ ६० ॥ यतस्त्वामपि यास्यंतं न कश्चिदनुयास्यति ॥ एकाकिना ते गंतव्यं समादाय शुभाशुभम् ॥ ६१ ॥ शुभाशुभं समादाय पुमानन्यत्र गच्छति ॥ अन्यत्र वास्य गच्छंति सुहृत्स्वजनबांधवाः ॥ ६२ ॥ नैनं सुहृत्समुपयाति न बंधु-

१ इडभाव आर्षः ।

वर्गो रायः प्रयत्नरचिता न च पुत्रदाराः ॥ तस्मिन्क्षणे प्रियशतानि च वर्जयित्वा प्राणाः स्वकर्मफलपुण्यभुजः प्रयांति ॥ ६३ ॥ मातृपितृसहस्राणि पुत्रदारशतानि च ॥ अनेकशो व्यतीतानि कस्य त्वं तानि कस्य च ॥ ६४॥ न तेषां भवता कार्यं न कार्यं तव तैरपि ॥ स्वकृतैस्तानि जातानि त्वमप्येको गमिष्यसि ॥ ६५ ॥ वर्षास्वेतत्करिष्यामि ग्रीष्महेमंतयोरिदम् ॥ इत्येवं चिंतयन्मूढो नांतरायं प्रपश्यति ॥ ६६ ॥ पश्यन्नपि प्रस्खलसि शृण्वन्नपि न बुध्यसे ॥ सर्वैस्त्वमिंद्रियैरेभिर्बुद्धिमानपि बध्यसे ॥ ६७ ॥ महाजालसमाकृष्टान्स्थले मत्स्यानिवोद्धृतान् ॥ मोहजालसमाकृष्टान्पश्य जंतून्सुदुःखितान् ॥ ६८ ॥ निबंधनी रज्जुरेव ग्रामे च वसतो रतिः ॥ भित्त्वैतां सुकृती याति छिनत्त्येनां न दुष्कृती ॥ ६९ ॥ अहिंसासत्यसंतोषक्षमार्जवतपोमयीम् ॥ नावमारुह्य यत्नेन संसारार्णवमुत्तर ॥ ७० ॥ प्रयास्यता किमास्यते समुत्थिते महाभये ॥ अतिप्रमाथि दारुणं तपो महत्समाचर ॥ ७१ ॥ न पुत्रबान्धवा दारा न समस्तः प्रियो जनः ॥ नानुव्रजति संकष्टे व्रजंतं चैकयायिनम् ॥ ७२ ॥ व्रजेत्स्वकर्म केवलं स्वयं कृतं शुभाशुभम् ॥ तदेव पुत्र सार्थिकं भवेत्परत्र गच्छतः ॥ ७३ ॥ न तत्र संविभज्यते स्वकर्मभिः परस्परम् ॥ यथा कृतं शुभाशुभं स्वयं तथोपभुज्यते ॥ ७४ ॥ यथा पथि प्रगच्छते न याति कोऽपि पृष्ठतः ॥ तथा गतिं गमिष्यतः किमात्मजैः परेण वा ॥ ७५॥ न यावदेव पच्यते महाजनः स्वपातकैः ॥ न तावदेव मुच्यते पुरा कृतैः क्वचिन्नरः ॥७६ ॥ त्वरागतिं निरीक्षते ध्रुवोऽसि पंचविंशकः ॥ कुरुष्व धर्मसंचयं वयो हि ते विवर्द्धते ॥ ७७ ॥ इदं जरा कलेवरं विजर्जरीकरोति ते ॥ बलांगरूपनाशिना विधस्त्व सौकृतं निधिम् ॥ ७८ ॥ धनस्य यस्य राजतो भयं न चास्ति चौरतः ॥ मृतं च यं न मुंचति समर्जयस्व तद्धनम् ॥७९॥ सहस्रशो ब्रवीमि ते हितं भवेच्च यद्वचः ॥

अशाश्वतं हि जीवितं कुरुष्व धर्ममादृतः ॥ ८० ॥ यास्यन्नेवाग्रतो मृत्योर्यो धर्मं नाचरेन्नरः ॥ अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ८१ ॥ निभृतेनापि ते नित्यं कर्तव्यो धर्मसंचयः ॥ मेधिबद्धः परिभ्राम्यन्घासग्रासं करोति गौः ॥ ८२ ॥ एकस्मिन्नप्यतिक्रांते दिने धर्मविवर्जिते ॥ दस्युभिर्मुषितो त्वेवं मुक्त आक्रंदते भृशम् ॥ ८३ ॥ प्रायशः क्षीणपापस्य नित्यं धर्मरतस्य च ॥ नरस्योत्पद्यते ज्ञानं ज्ञानान्मोक्षं च गच्छति ॥ ८४ ॥ कर्मणा मनसा वाचा यो धर्मनिरतः सदा ॥ अफलाकांक्षिचित्तश्च स मोक्षमधिगच्छति ॥ ८५ ॥ श्रीशुक उवाच ॥ श्रुता मे विविधा धर्माः प्राणिनां चाप्यनित्यता ॥ सांप्रतं मोक्षतत्वार्थं भगवन्वक्तुमर्हसि ॥ ८६ ॥ श्रीवेदव्यास उवाच ॥ नान्यात्प्रविद्यात्तपसो यश्चेन्द्रियविनिग्रहात् ॥ नान्यत्स्वधर्माचरणान्मोक्षं विंदेत्स मानवः ॥ ८७ ॥ जीवितं यस्य धर्मार्थं धर्मो ज्ञानार्थमेव च ॥ ज्ञानं च ध्यानयोगार्थं सर्वपापैः स मुच्यते ॥ ८८ ॥ सर्वसंगपरित्यागः सर्वद्वंद्वसहिष्णुता ॥ सर्वद्वंद्वसमत्वं च मोक्षस्य विधिरुत्तमः ॥ ८९ ॥ इंद्रियाणि मनश्चैव पिंडीकृत्य मनो हृदि ॥ एकाकी नित्यमास्थेयः परं ब्रह्माधिगच्छाति ॥ ९० ॥ न पद्मासनतो योगो न नासाग्रनिरीक्षणात् ॥ मनसश्चेंद्रियाणां च संयोगो योग उच्यते ॥ ९१ ॥ कर्मणा मनसा वाचा वासुदेवमतांद्रितः ॥ भजते सर्वलोकेशं स मोक्षमधिगच्छाति ॥ ९२ ॥ एतदेव परं ज्ञानमेतदेव परंतपः ॥ एतदेव परो योग एतत्स्वर्गस्य साधनम् ॥ ९३ ॥ यदास्य युंजतो योगं याति भावोऽप्यभावताम् ॥ तदा भवति योगस्थः शेषं तत्प्राप्तिसाधनम् ॥ ९४ ॥ अस्मिन्नेव समाधाने धारय त्वं मनः सदा ॥ नान्वेष्टव्या विशेषेण विशेषा विघ्नकारकाः ॥ ९५ ॥ एतद्वैपायनवचो निशम्य च मनोगतम् ॥ परित्यज्य स्वपितरं शुको मोक्षमुपागमत् ॥ ९६ ॥ प्रणम्य विष्णोश्चरणांबुजाभ्यां तत्रैव पुत्रो मुनिपुंगवस्य ॥ सुखं प्रयत्तें-

द्रियचित्तवृत्तिर्ययौ महात्मा पुरुषार्थकांक्षी ॥ ९७ ॥ भीष्म उवाच ॥ तथा त्वं हि महाराज योगयुक्तः सदा भव ॥ शुकानुशासनं त्वेतदमृतत्वमवाप्स्यसि ॥ ९८ ॥ य इदं शृणुयान्नित्यं व्यासेन परिकीर्तितम् ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ९९ ॥

इति श्रीमदितिहाससमुच्चये व्यासशुकोपाख्यानं नामाष्टदशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः १९ ।

युधिष्ठिर उवाच ॥ देयमिदं देयमिदमिति संश्रुत्य वेदनाम् ॥ बहुदेयाश्च राजानस्ते देयं किं विशिष्यते ॥ १ ॥ भीष्म उवाच ॥ सर्वेषामेव दानानां भूमिदानं परं स्मृतम् ॥ सर्वपापहरं तद्धत्स्वर्ग्यमाहुर्मनीषिणः ॥ २ ॥ भूमेः सर्वाणि दानानि संभवंति न संशयः ॥ तस्माद्भूमिप्रदो राजन्सर्वतः प्रोच्यते बुधैः ॥ ३ ॥ सुवर्णं रजतं वस्त्रं धान्यानि विविधानि च ॥ सर्वमेव महीपाल ददाति वसुधां ददत् ॥ ४ ॥ तडागानुदपानानि नगान्पुष्पफलप्रदान् ॥ यः स सर्वरसांश्चैव ददाति वसुधां ददत् ॥ ५ ॥ भूमिं सर्वगुणोपेतां यो दद्यात्सस्यमालिनीम् ॥ न तस्य लोकः क्षीयंते यावत्तिष्ठति भूरियम् ॥ ६ ॥ अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ॥ न तत्फलमवाप्नोति भूमिदानाद्यदाप्यते ॥७॥ तपस्विनोऽथ यज्वानः सत्यवंतो बहुश्रुताः ॥ गुरुदेवरताश्चैव नातिक्रामन्ति भूमिदम् ॥८॥ भर्तुर्निःश्रेयसे युक्ता महात्मानो रहो गताः ॥ स्वर्गलोकगताः संतो नातिक्रामाति भूमिदम् ॥ ९ ॥ अत्र गाथां पुरा गीतां कीर्तयंति पुराविदः ॥ यां श्रुत्वा जामदग्न्येन प्रदत्ता कश्यपाय भूः ॥ १० ॥ मामदत्त्वा न संपत्स्ये मां दत्त्वा मामवाप्स्यसि ॥ अस्मिँल्लोके परे चैव ततो ददत मां जनाः ॥ ११ ॥ सोऽत्र धीरः स पुरुषः स विद्वान्स च पुण्यकृत् ॥ स दांतः स च विक्रांतो यो ददाति वसुंधराम् ॥ १२ ॥ मृत्योर्वै किंकरा दद्यास्तपोवह्नेः सुदारुणाः ॥ घोराश्च दारुणाः

पापा नोपसर्पन्ति भूमिदम् ॥ १३ ॥ ब्राह्मणाय महीं दत्त्वा सर्वकामफलान्वितां ॥ स सर्वांल्लभते कामान्यावदास्ते च मेदिनी ॥ १४ ॥ श्रोत्रियाय दरिद्राय बहुभृत्याय सीदते ॥ दत्त्वा भूमिं गुणोपेतां सर्वान्कामानवाप्नुयात् ॥ १५ ॥ क्षुत्क्षामाय च दांताय वैष्णवाय युधिष्ठिर ॥ प्रदत्ता येन सा भूमिः सोऽक्षयं फलमश्नुते ॥ १६ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ बृहस्पतेश्च संवादमिंद्रस्य च युधिष्ठिर ॥ १७ ॥ इंद्र उवाच ॥ भगवन्केन दानेन स्वर्गतः फलमश्नुते ॥ यदक्षयं फलं प्राहुस्तन्मे त्वं वक्तुमर्हसि ॥ १८ ॥ बृहस्पतिरुवाच ॥ भूमिदानात्परं दानं नापरं विद्यते क्वचित् ॥ एवमाह पुरा पृष्टो भगवान्मां पितामहः ॥ १९ ॥ त्वं च पूर्वान्हि पुरुषान्नृनथो षट् तथा परान् ॥ एकादश परित्राथी ससस्यां वसुधां ददत् ॥ २० ॥ इक्षुभिः सहितां भूमिं यवगोधूमशाद्वलाम् ॥ यो ददाति द्विजश्रेष्ठे न स प्रच्यवते दिवः ॥ २१ ॥ शय्या सिंहासनं छत्रं वराश्वा वरवारणाः ॥ भूमिदानस्य पुण्यानां फलं स्वर्गे पुरंदर ॥ २२ ॥ यथा चंद्रमसो वृद्धिरहन्यहनि जायते ॥ तथा कृतं भूमिदानं शश्वदेव विवर्द्धते ॥ २३ ॥ यत्किंचित्पुरुषः पापं कुरुते वृत्तिकर्शितः ॥ तत्सर्वं भूमिदानेन स्वल्पेनाप्यस्य नश्यति ॥ २४ ॥ मुच्यते ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ॥ भूमिं सर्वगुणोपेतां[1] दत्त्वा नात्र विचारणा ॥ २५ ॥ सीदते बहुभृत्याय श्रोत्रियायाहिताग्नये ॥ भूमिं वृत्तिकरीं दत्त्वा सुखी भवति मानवः ॥ २६ ॥ कृत्वा च सुमहत्पापं भूमिं दत्त्वा द्विजातये ॥ समुत्सृजाति तत्सर्वं जीर्णां त्वचमिवोरगः ॥ २७ ॥ यस्य विष्णोः परं ज्ञानं यस्य विष्णौ परं मनः ॥ यस्य विष्णुपरं ध्यानं वासुदेवो हृदि स्थितः ॥ २८ ॥ तस्मै देया महाबाहो भूमिः सर्वफलान्विता ॥ तस्मान्न भूमिदानस्य पात्रमस्तीति मे मतिः ॥ २९ ॥ कल्पांतरमिदं

१ पूर्वोक्तसामग्रीसमेता ।

प्राहुर्धर्मज्ञाः परमर्षयः ॥ स यजेदश्वमेधेन यश्च दद्याद्वसुंधराम् ॥ ३० ॥
विमानं कामगं दिव्यं दिव्यस्त्रीशतसेवितम् ॥ उपतिष्ठति देवेंद्र स्वर्ग-
लोके धराप्रदम् ॥ ३१ ॥ वैष्णवान्व्रतसंपन्नानाहिताग्नीन्दृढव्रतान् ॥
दीक्षितान्प्रतिगृह्यार्थैर्न याति यमशासनम् ॥ ३२ ॥ येऽपि संकीर्यमाणा
हि कुजनाः पापचेतसः ॥ तेऽपि दत्त्वा महीं सद्यो मुच्यंते सर्वकिल्बिषैः
॥ ३३ ॥ नास्ति भूमिसमं दानं नास्ति भूमिसमो निधिः ॥ न भूदान-
समो धर्मो न पापमनृतात्परम् ॥ ३४ ॥ भीष्म उवाच ॥ इत्येवं भूमिदा-
नस्य फलं श्रुत्वा तु वासवः ॥ वसुधां वसुसंपन्नां कृत्स्नामंगिरसे ददौ
॥ ३५ ॥ तस्मात्त्वमपि राजेन्द्र स्ववीर्येणार्जितां महीम् ॥ स्वाध्याय-
व्रतयुक्तेभ्यो द्विजेभ्यो देहि नित्यशः ॥ ३६ ॥ युधिष्ठिर उवाच ॥ श्रुता
मे कुरुशार्दूल भूमिदानस्य ये गुणाः ॥ अपहारेषु ये दोषाः स्युस्तांस्त्वं
वक्तुमर्हसि ॥ ३७ ॥ भीष्म उवाच ॥ षष्टिर्वर्षसहस्राणि स्वर्गे वसति
भूमिदः ॥ आहर्ता चानुमंता च तान्येव नरके वसेत् ॥ ३८ ॥ विन्ध्या-
टवीष्वतोयासु शुष्ककोटरवासिनः ॥ कृष्णसर्पाः प्रजायंते ब्रह्मदाया-
पहारिणः ॥ ३९ ॥ न छिंद्यात्स्पर्शितां भूमिं परेण वसुधाधिप ॥
श्रोत्रिये च दरिद्रे च बहुभृत्ये च भारत ॥ ४० ॥ द्विजे संपादितां भूमिं
हर्तुर्जन्म न[2] मानुषम् ॥ जात्यंधक्लीबपंगुत्वं भवेत्कीटपतंगता ॥ ४१ ॥
श्रुताचरणवृद्धानां दीनानामवसीदताम् ॥ निराशानां हृते क्षेत्रे पतते
सकलं कुलम् ॥ ४२ ॥ महतामपि पापानां दृष्टा शास्त्रेषु निष्कृतिः ॥
ब्रह्मदायापहर्तॄणां न दृष्टा निष्कृतिः क्वचित् ॥ ४३ ॥ स्वदत्तां परदत्तां
वा यो हरेच्च वसुंधराम् ॥ षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः
॥ ४४ ॥ स तिर्यक्त्वमवाप्नोति जायमानः पुनः पुनः ॥ सशैलनगर-
ग्रामा ससरिद्वनकानना ॥ ४५ ॥ तानिदानीं न पश्यामि यैर्भुक्तेयं
वसुंधरा ॥ आसीदियं पुरा राजन्दिलीपनहुषस्य च ॥ ४६ ॥ ययाते-

१ बृहस्पतये । २ हर्तुर्मानुषं जन्म न भवेत्, भवेच्चेज्जात्यन्धतादि स्यादिति भावः ।

रंबरीषस्य मांधातुर्भरतस्य च ॥ ४७ ॥ अन्येषां च सहस्राणां यान्न संख्यातुमुत्सहे ॥ तेभ्यस्त्वयापि संप्राप्ता त्वत्तश्चान्यं समेष्यति ॥ ४८ ॥ तथाप्येतां महाराज राजानो मदमोहिताः ॥ न प्रयच्छंति विप्रेभ्यो दत्तामपहरंति च ॥ ४९ ॥ पूर्वैर्दत्तां द्विजातिभ्यो भूमिमन्ये हरंति च ॥ पूर्वदत्तां द्विजातिभ्यो रक्ष तस्माद्युधिष्ठिर ॥ ५० ॥ मह्या भूमिपतिश्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥ बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ॥५१॥ यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ तस्मात्त्वया न हर्त्तव्या भूर्द्विजानां कदाचन ॥ ५२ ॥ यदीच्छसि महाराज शाश्वतीं गतिमात्मनः ॥ सीमाविवादे संप्राप्ते सीम्नः सूक्ष्मात्सुदर्शनात् ॥५३॥ दातव्या सा न हर्तव्या हरणे किल्बिषी भवेत् ॥ ५४॥ दानात्स्वर्गः कुरुश्रेष्ठ हरणान्नरको ध्रुवम् ॥ तस्मात्सीमा न हर्तव्या न पापमधिकं ततः ॥५५॥ यः पठेच्छ्राद्धकाले तु भूमिदानस्य संस्तवम् ॥ अक्षय्यमन्नदानं तु पितॄंस्तस्योपतिष्ठति ॥ ५६ ॥

इति श्रीमदितिहाससमुच्चये भूदानमहिमोपाख्यानं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः २० ।

युधिष्ठिर उवाच ॥ गवां दानं महापुण्यमेवमाहुर्मनीषिणः ॥ विस्तरेण महाप्राज्ञ तन्मह्यं वक्तुमर्हसि ॥ १ ॥ भीष्म उवाच ॥ न गोदानात्परं दानं किंचिदस्तीति मे मतिः ॥ सा गौर्न्यायार्जिता दत्ता कृत्स्नं तारयते कुलम् ॥२॥ अमृतं वै गवां क्षीरमित्युवाच प्रजापतिः ॥ तस्माद्ददाति यो धेनुं मम लोकं स गच्छति ॥३॥ समानवत्सां कपिलां दत्त्वा धेनुं गुणान्विताम् ॥ सवत्सां हेमशृंगाग्रां नरः स्वर्गे महीयते ॥ ४ ॥ यावदर्धप्रसूता गौस्तावत्सा पृथिवीसमा ॥ पृथिवी तेन दत्ता स्यात्तादृशीं गां ददाति यः ॥ ५ ॥ एकां च दशगुर्दद्याद्दश दद्याच्च

गोशती ॥ शतं सहस्रगुर्दद्यात्सर्वास्तुल्यफला हि ताः ॥ ६ ॥ युधिष्ठिर उवाच ॥ देयाः किंलक्षणा गावः काश्चापि परिवर्जिताः ॥ कीदृशाय प्रदातव्या न देया कीदृशाय च ॥७॥ भीष्म उवाच ॥ तरुणी रूपसंपन्ना सुशीला सुपयस्विनी ॥ न्यायार्जिता सवत्सा च प्रदेया ब्राह्मणाय गौः ॥ ८ ॥ वृद्धा सरोगा हीनांगा वंध्या दुष्टा मृतप्रजा ॥ दूरस्थान्यायलब्धा वा न देया गौः कदाचन ॥९॥ सीदते बहुभृत्याय श्रोत्रियायाहिताग्नये ॥ अतिथिप्रियाय दांताय धेनुर्देया गुणान्विता ॥१०॥ अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च ॥ हव्यकव्यव्यपेताय न देया गौः कदाचन ॥ ११ ॥ प्रासादा यत्र सौवर्णाः शय्यारत्नोज्ज्वलास्तथा ॥ वराश्चाप्सरसो यत्र तत्र गच्छंति गोप्रदाः ॥ १२ ॥ गोप्रदानान्नरो याति ब्रह्मलोकं सनातनम् ॥ विमानेनार्कवर्णेन दिव्यरत्नविराजता ॥ १३ ॥ सुरूपयुक्ताः सुश्रोण्योऽसिताक्ष्यो वरयोषितः ॥ रमयंति विमानस्थं दिव्याभरणभूषिताः ॥ १४ ॥ वेणूनां वल्लकीनां च नूपुराणां च शिंजितैः ॥ गीतैश्च हरिणाक्षीणां सुप्तः सन्प्रतिबुध्यते ॥ १५ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ उद्दालकऋषेर्वाक्यं नासिकेतस्य चोभयोः ॥१६॥ ऋषिरुद्दालको दीक्षामधिगम्य ततः सुतम् ॥ त्वं मामुपचरस्वेति नासिकेतमभाषत ॥ १७ ॥ समाप्ते नियमे तस्मिन्स मुनिः प्राह तं सुतम् ॥ उपस्पर्शनयुक्तस्य स्वाध्यायनिरतस्य च ॥१८॥ एधा दर्भाः सुमनसः स्थापिता मे जलांतिके ॥ विस्मृतास्तान्समादातुं नदीतीरमितो व्रज ॥ १९ ॥ स गत्वाप्राप्य तत्सर्वं नदीवेगसमाप्लुतम् ॥ न दृष्टं तन्मया तत्र पितरं प्रत्यभाषत ॥ २० ॥ क्षुत्पिपासासमायुक्तो मुनिरुद्दालकस्तदा ॥ यमं पश्येति तं पुत्रमशपत् क्रोधमूर्च्छितः ॥२१॥ ततः स पित्रा निहतो वाग्वज्रेण कृतांजलिः ॥ प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥२२॥ तं दृष्ट्वा पतितं पुत्रं स मुनिः क्रोधमूर्च्छितः ॥ किं मया कृतमित्युक्त्वा परिष्वज्य रुरोद तम् ॥२३॥

तच्छ्रुत्वा मुनयः सर्वे तपोवननिवासिनः ॥ ते च आगत्य दुःखार्ता परिवार्योपतस्थिरे ॥ २४ ॥ पितुरश्रुप्रपातेन नासिकेतमुपस्थितम् ॥ उदतिष्ठत्प्रभावाद्धि दृष्ट्वा सस्यमिवाप्लुतम् ॥ २५ ॥ तं सुतं सोऽपि पप्रच्छ क्षीणस्वप्नमिवोत्थितम् ॥ यद्दृष्टं तत्र ते पुत्र तत्सर्वं कथयस्व नः ॥ २६॥ नासिकेत उवाच ॥ दृष्ट्वा तु मां तत्र गतं स देवो यमं प्रपश्येत्याह पिता भवंतम् ॥ न चैतच्छक्यमनृतं विप्र कर्तुं दृष्टश्चाहं प्रतिगच्छेति सौम्य ॥२७॥ शोचत्यसौ यस्तव देहकर्ता करोमि किं वा मनसः प्रियं ते ॥ प्रियातिथे वरमिष्टं वृणीष्वेत्युक्तस्त्वहं धर्मराजं ययाचे ॥ २८ ॥ यदि प्रसन्नो भगवन्ममाद्य स्थानानि मे दर्शय गोप्रदातुः ॥ ततः समारोप्य स मां विमानमत्यद्भुतान्दर्शयामास लोकान् ॥ २९ ॥ अथापश्यमहं तत्र विमानानि सहस्रशः ॥ बह्वाश्चर्यप्रकाशानि जांबूनदमयानि च ॥३०॥ दिव्यरत्नविचित्राणि सेवितान्यप्सरोगणैः ॥ सर्वकामसमृद्धानि कामगानि स्थिराणि च ॥ ३१ ॥ मधुक्षीरवहा नद्यो दधिसर्पिर्वहास्तथा ॥ भक्षभोज्यवहाश्चैव शैलाः शतसहस्रशः ॥ ३२ ॥ सर्वं दृष्ट्वा तमहं धर्मराजमवोचमेतद्धिविस्मयाविष्टचेताः ॥ क्षीरस्यैता सर्पिषश्चैव नद्यः शश्वत्स्रोताः कस्य शिष्टस्य दिष्टाः ॥ ३३ ॥ यमोऽब्रवीद्द्विज भोज्यं च ह्येतद्ये दातारः साधवो गोरसानाम् ॥ ३४ ॥ लोकाश्चैते शाश्वता वीतशोका गोदानां यत्र ते कं श्रयन्ते ॥ ३५ ॥ अलाभे यो गवां दद्यात्तिलधेनुं यथाविधि ॥ सर्वकामवहां दिव्यां स नदीं समुपाश्नुते ॥ ३६ ॥ तिलालाभे च यो दद्याद्घृतधेनुमथापि वा ॥ जलधेनुं तथा चैव न स प्रच्यवते दिवः ॥ ३७ ॥ जितेंद्रियाय शांताय वैष्णवाय यथाविधि ॥ धेनुं दत्त्वा घृतमयीं विष्णुसालोक्यमश्नुते ॥३८॥ पितरं चैव धर्मात्मा पितामहमथापि वा ॥ ३९ ॥ घृतधेन्वा परिपाति सप्त सप्त च सप्त च ॥४०॥ एतत्सर्वं दर्शयित्वा प्रहृष्टः पुनः पुनः प्राह वैवस्वतो माम् ॥

१ सुखम् ।

दानेनातः प्रयतो भूः सदैव विशेषतो गाश्च दद्याद्गुणाढ्याः ॥ ४१ ॥ दद्याद्धेनुं सद्गुणां कांस्यदोहां यो हेमशृंगीं वसनोत्तरीयैः ॥ यावंति रोमाणि भवंति तस्यास्तावद्वर्षाणि स्वर्गलोकं भुनक्ति ॥ ४२ ॥ तथानड्वाहं श्रोत्रियाय प्रदद्याद्दांतं धुर्यं बलवंतं युवानम् ॥ कुलाजीव्यं वीर्यवंतं महांतं प्राप्नोति लोकानमलान्सुदिव्यान् ॥ ४३ ॥ इत्युक्तोऽहं धर्मराजेन तात धर्मात्मानं तं शिरसा प्रणम्य ॥ अनुज्ञातस्तेन चैवं ततोऽहं प्रत्यागमं भवतः पादमूलम् ॥ ४४॥ शप्तोऽप्यहं भवतोऽनुग्रहाद्वै प्राप्तो मया तत्र दृष्टः स देवः ॥ दानात्पुष्टिं तत्र दृष्ट्वागमं च निःसंदिग्धं गाः सदाहं प्रदास्ये ॥ ४५ ॥ गावो देव्यंश्चाशु देवस्य तुष्ट्यै लोकान्प्राप्तुं वैष्णवान्वैष्णवेभ्यः ॥ एतत्पुण्यं ब्रूहि विद्वन्नराणामित्यादेशं त्वब्रवीद्धर्मराजः ॥ ४६ ॥ भीष्म उवाच ॥ एतच्छ्रुत्वा तु मुनयः सर्वे ते विस्मयं गताः ॥ गवां स्तुवंतो माहात्म्यं जग्मुः स्वानाश्रमान् प्रति ॥ ४७ ॥ एतच्छ्रुत्वा तु कौंतेय गवां माहात्म्यमुत्तमम् ॥ गावः प्रदक्षिणीकार्या दातव्याश्च प्रयत्नतः ॥४८॥ शीलोपपन्नां वसनोत्तरीयां कांस्योपदोहां कनकाग्रशृंगीम् ॥ विप्राय दत्वा भगवत्प्रियाय प्राप्नोति लोकान्पुरुषः सुपुण्यान् ॥ ४९ ॥

इति श्रीमदितिहाससमुच्चये गोदानमाहात्म्योपाख्यानं नाम विंशोऽध्यायः ॥ २०॥

## एकविंशोऽध्यायः २१ ।

युधिष्ठिर उवाच ॥ सर्वेषामेव दानानां यद्दानं सुमहाफलम् ॥ सद्यः प्रीतिकरं चैव तन्मे ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ इममर्थं पुरा पृष्टो देवर्षिर्नारदो मया ॥ यदुक्तवानसौ विप्रस्तन्मे निगदतः शृणु ॥ २ ॥ नारद उवाच ॥ नान्नदानात्परं दानं किंचिदस्ति नरेश्वर ॥ अन्नेन धार्यते कृत्स्नं चराचरमिदं जगत् ॥ ३ ॥ अन्नं वै प्राणिनां प्राणा इत्युवाच बृहस्पतिः ॥ तस्मादन्नप्रदो राजन्प्राणदः प्रोच्यते बुधैः ॥४॥

अन्नदः पशुमाँल्लोके धनवान् रूपवानपि ॥ आयुष्मान्बलवांश्चैव सुखी प्रेत्य च जायते ॥ ५ ॥ नित्यं ददाति यच्चान्नमतिथिभ्यः समाहितः ॥ स याति ब्रह्म सालोक्यमेवमाह पराशरः ॥ ६ ॥ अन्नेन सदृशं दानं न भूतं न भविष्यति ॥ तस्मादन्नं विशेषेण दातुमिच्छंति साधवः ॥ ७ ॥ कृत्वापि च महत्पापं यः पश्चादन्नदो भवेत् ॥ दुर्वृत्तः साधुवृत्तो वा मूर्खः पंडित एव वा ॥ विमुक्तः सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥ ८ ॥ आशंसंतीह पितरः सुवृष्टिमिव कर्षकाः ॥ अस्माकमपि पुत्रो वा पौत्रो वान्नं प्रदास्यति ॥ ९ ॥ यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते ॥ श्रांतायादृष्टपूर्वाय स पुण्यां गतिमाप्नुयात् ॥ १० ॥ न पृच्छेद्गोत्राचरणं न स्वाध्यायं श्रुतं न वा ॥ याचते ब्रह्मणे त्वन्नं दद्यादेवाविचारयन् ॥ ११ ॥ अदृष्टो दृष्टपूर्वो वा मित्रो वा यदि वा सुहृत् ॥ यः प्राप्ते वैश्वदेवांते सोऽतिथिः स्वर्गसंक्रमः ॥ १२ ॥ ब्राह्मणान्भोजयेन्नित्यं शान्ताञ्छीलसमन्विताम् ॥ ना यंत्री न चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ १३ ॥ गायत्रीसारमात्रोऽपि वरं विप्रः सुयंत्रितः ॥ ईश्वरः सर्वभूतानां हृदये समवस्थितः ॥ १४ ॥ तस्मादतिथये कार्यो भावो योऽयमिहागतः ॥ पादाभ्यंगैः शिरोभ्यंगैर्दानमानार्चनादिभिः ॥ १५ ॥ मृष्टवाक्यैर्विशेषेण पूजनीयो द्विजोत्तमः ॥ अन्नं हि दत्त्वातिथये सम्यक् श्रद्धासमन्वितः ॥ दाता स्वर्गमवाप्नोति देवैरेवाभिपूज्यते ॥ १६ ॥ प्रीयतां विष्णुरित्युक्त्वा वैष्णवं शांतमानसम् ॥ भोजेयन्मिष्टमेवान्नं यथाशक्तिसमन्वितः ॥ १७ ॥ आराध्य वै हरिं शांतं सदा तद्भावनिष्ठितम् ॥ प्रीयतां भगवान्विष्णुरिति संकल्प्य भोजयेत् ॥ १८ ॥ मिष्टान्नमपरिक्लिष्टं शर्कराढ्यं घृतप्लुतम् ॥ दध्युत्तरं यथाशक्ति दातव्यं भूतिमिच्छता ॥ १९ ॥ ब्राह्मणेभ्यः प्रतिश्रुत्य न दद्याद्योऽन्नमल्पधीः ॥ स याति नरकं घोरं तिर्यग्योनिषु जायते ॥ २० ॥ प्रियातिथिर्गृहस्थो यः संतुष्टो विजितेंद्रियः ॥ तपः

स्वाध्यायनिरतः स्वर्गस्तस्य न दूरतः ॥२१॥ भीष्म उवाच ॥ नारदेनै-
वमुक्तस्तु प्रादादन्नमहं सदा ॥ अन्नं प्राणास्त्वमप्यन्नं तस्माद्देहि युधि-
ष्ठिर ॥ २२ ॥ अन्ने दत्ते मनुष्येषु प्राणा दत्ता भवंत्युत ॥ प्राणदाना-
त्परं दानं नैवान्यद्भुवि विद्यते ॥ २३ ॥ श्रुतं ते मानवे राजन्प्राणा दत्ता
भवंत्युत ॥ प्राणदानात्परं दानं नैवान्यद्भुवि विद्यते ॥ २४ ॥ तादृशीं
पुरुषव्याघ्र स प्रेत्य लभते गतिम् ॥ श्रद्धया सततं योऽन्नमतिथिभ्यः
प्रयच्छति ॥ स याति परमं स्थानं दुष्प्रापं यत्सुरैरपि ॥ २५ ॥
ददाति योऽन्नं सघृतं सुसंस्कृतं दध्ना सुपूर्णं परितोऽपि शोभितम् ॥
द्विजेंद्रमुख्याय सुपूर्णवत्सरं न तस्य लोकाः परिहानिमन्वयुः ॥ २६ ॥
भीष्म उवाच ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ बहोश्चक्षोश्च
संवादं तन्मे निगदतः शृणु ॥ २७ ॥ चक्षुः प्रयोगं संगम्य चिरं तिष्ठ-
त्युपोषितः ॥ तस्य शिष्यो बहुर्नाम परिचर्यां चकार सः ॥२८॥ सम-
पृच्छद्गुरुं तत्र क्षुत्क्षामं कर्शितं मुनिम् ॥ आख्याहि भगवन्सत्यं
कृत्वा व्याधेश्च वेदनाम् ॥ २९ ॥ चक्षुरुवाच ॥ शक्तिशूलगदाचक्र-
खड्गतोमरसायकैः ॥ अभिन्नवेदनो यस्तु क्षुधया सोऽपि निर्जितः ॥३०॥
श्वासकासोद्भवा यैस्तु ज्वरापस्मारसंभवाः ॥ व्याधयो निर्जिताः सर्वे
क्षुधया तेऽपि निर्जिताः ॥३१॥ रत्नहेमविचित्रांगो मुकुटी भृतकुंडलः ॥
क्षुधया न विराजेत प्रेतवद्दृश्यते नरः ॥३२॥ यथा भूमिगतं तोयं सूर्य-
गोभिः प्रशुष्यति ॥ शरीरस्थास्तथा धातूनग्निः शोषति[1] जाठरः ॥३३॥
न शृणोति न चाघ्राति चक्षुषा च न पश्यति ॥ ध्वंसते वेपते मूढो मुह्यति
क्षुधयान्वितः ॥३४॥ न पूर्वां दक्षिणां वापि पश्चिमां नोत्तरां दिशम् ॥
क्षुधाविष्टो न जानाति मोहमेति मुहुर्मुहुः ॥ ३५ ॥ मूकत्वं बधिरत्वं
च जडांगमपि पंगुलम् ॥ शौचभ्रष्टममर्यादं क्षुधा सर्वं करोति हि
॥ ३६ ॥ जनयित्रीं च जनकं भार्यां दुहितरं तथा ॥ भ्रातरं बंधुवर्गं

---

१ शोषयतीत्यर्थः ।

च हिनस्तीह क्षुधान्वितः ॥ ३७ ॥ न पितॄन्पूजयेत्सम्यङ्‌ गुरुं न च देवताम् ॥ कार्यं कर्तुमशक्तश्च क्षुधया क्षामतां गतः ॥ ३८ ॥ एवंविधानि दुःखानि जायंते क्षुधया नृप ॥ भवंति विपरीतानि तृष्णा चैतानि पुत्रक ॥ ३९ ॥ बहुरुवाच ॥ कथनीया त्वया तात क्षुधाया वेदना तु या ॥ माहात्म्यमपि चान्नस्य श्रोतुमिच्छामि तत्त्वतः ॥४०॥ चक्षुरुवाच ॥ अन्नात्परतरं लोके न भूतं न भविष्यति ॥ अन्नमूलं जगत्सर्वं ह्यन्ने चैव प्रतिष्ठितम् ॥ पितरो देवदैत्याश्च सर्वेऽप्यन्नमुपाश्रिताः ॥ ४१ ॥

इति श्रीमदितिहाससमुच्चये अन्नदानमहिमोपाख्यानं नामैकविंशोऽध्यायः ॥ २१ ॥



## द्वाविंशोऽध्यायः २२ ।

युधिष्ठिर उवाच ॥ तिलान्पवित्रमतुलं प्रवदंति मनीषिणः ॥ प्रदाने यत्फलं तेषां तन्मे ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ सर्वेषामेव दानानां तिलदानं परं स्मृतम् ॥ सर्वपापहरं तद्धि पवित्रं स्वर्ग्यमेव च ॥ २ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ ब्राह्मणस्य सुसंवादं यमस्य च महात्मनः ॥ ३ ॥ मध्यदेशे महाग्रामो ब्राह्मणानां युधिष्ठिर ॥ गंगायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥ ४ ॥ पर्णशाल इति ख्यातः प्रभूतांबुसमित्कुशः ॥ विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तदा ॥ ५ ॥ अथ प्राह यमः कश्चित्पुरुषं कृष्णपिंगलम् ॥ रक्ताक्षमूर्द्धरोमाणं काकजंघांघ्रिनासिकम् ॥ ६ ॥ गच्छ त्वं ब्राह्मणग्रामं तत्र गत्वा तमानय ॥ अगस्त्यगोत्रजं विप्र नामतश्चापि शर्मिलम् ॥ ७ ॥ न चान्यमानयेथास्त्वं सगोत्रं तत्र पार्श्वतः ॥ तुल्यधान्यधनं तत्र तुल्यरूपगुणं तथा ॥ ८ ॥ स गत्वा विप्रकूलं तु यमदूतश्चकार तत् ॥ तं मोहादानयामास प्रतिषिद्धो यमेन यः ॥ ९ ॥ स दृष्ट्वा द्विजमायांतं

१ पूर्वोदितानि ।

पूजयामास तं यतः ॥ प्रोवाच नीयतामेष सोऽन्य आनीयतामिति ॥ १० ॥ प्रत्युवाच यमं विप्रो निर्विण्णोऽध्ययनेन सः ॥ स नः कालैर्भवेच्छिष्ट इत्युक्तस्तं यमोऽब्रवीत् ॥ ११ ॥ यम उवाच ॥ अकालविहितं नाहं प्रापयामीह कंचन ॥ यस्तु धर्मं त्यजेत्कश्चित्तं तु जानामि केवलम् ॥ १२ ॥ गच्छ शीघ्रं त्वमद्यैव स्वगृहं द्विजसत्तम ॥ तद्वदस्व यथाकामं प्रियं किं करवाणि ते ॥ १३ ॥ ब्राह्मण उवाच ॥ यत्कृत्वा सुमहत्पुण्यं तन्मे त्वं वक्तुमर्हसि ॥ प्रमाणं त्वं हि लोकानां धर्माधर्मविनिर्णये ॥ १४ ॥ यम उवाच ॥ आनृशंस्यं क्षमा सत्यमहिंसा सत्यमार्जवम् ॥ दानं प्रसादो माधुर्यं मार्दवं च यमा दश ॥ १५ ॥ शौचमिज्या तपः सत्यं स्वाध्यायोपस्थनिग्रहौ ॥ व्रतोपवासो मौनं च स्नानं च नियमा दश ॥ १६ ॥ यमैश्च नियमैश्चैव यः करोत्यात्मसंयम् ॥ अदृष्ट्वैवेह मां ब्रह्मन्ब्रह्मलोकं स गच्छति ॥ १७ ॥ शृणु धर्मरहस्यं च यदन्यत्कथयामि ते ॥ तिलाः पवित्रमतुलं मा ते भूदत्र संशयः ॥ १८ ॥ महर्षेः कश्यपस्यैते गात्रेभ्यः प्रच्युताः पुरा ॥ तेन दिव्यं गता भावं प्रदाने चोत्तमाः स्मृताः ॥ १९ ॥ तिला भक्षयितव्याश्च शास्त्रप्रोक्तविधानतः ॥ विप्रेभ्यश्च प्रदातव्याः श्रेयस्कामैर्नरैरिह ॥ २० ॥ माघमासे तु संप्राप्ते पूर्वपक्षे द्विजोत्तम ॥ गोमयं मंडलं कृत्वा चतुरस्रं महामते ॥ २१ ॥ नवं वस्त्रं समास्तीर्य कृष्णाजिनसमन्वितम् ॥ सहिरण्यं तिलास्तत्र निधाय वसनोपरि ॥ २२ ॥ निष्कत्रयं सुवर्णस्य स्थापयेत्कर्णिकोपरि ॥ पूजयेद्विभवैः सम्यग्गंधपुष्पादिभिस्तथा ॥ २३ ॥ तैलप्रस्थं घृतप्रस्थं दद्याच्च क्रमतः परम् ॥ स्थापयेत्पार्श्वतस्तस्य धान्यपात्राणि षोडश ॥ २४ ॥ एवमाराध्य तत्पद्मं तिलद्रोणमयं शुभम् ॥ एकरात्रं द्विरात्रं वा त्रिरात्रमथ वा द्विज ॥ २५ ॥ तिलहारो भवेत्पूर्वमुपवासमथापि वा ॥ कुर्यात्स्वकायशुद्ध्यर्थं वासुदेवमनुस्मरन् ॥ २६ ॥ हिरण्यगर्भममृतं श्रीगर्भं परतः परम् ॥ शंखचक्रगदापाणिं

पीतवाससमच्युतम् ॥ २७ ॥ श्रीवत्सांकं जगद्बीजं सर्वकारणकारणम् ॥ कविं पुराणं विश्वेशं पुंडरीकनिभेक्षणम् ॥ २८ ॥ आसीनं कर्णिकामध्ये सर्वशक्तिसमन्वितम् ॥ कृतांजलिपुटो भूत्वा नमस्कृत्य पुनः पुनः ॥ २९ ॥ जितेंद्रियाय शांताय प्रसन्नायात्मवेदिने ॥ रागद्वेषविहीनाय वैष्णवाय विशेषतः ॥ ३० ॥ प्रीयतां माधवो देव इत्युक्त्वा तमनुस्मरन् ॥ दद्यात्तिलमयं पद्मं शुचिर्भूत्वा समाहितः ॥ ३१ ॥ हिरण्यगर्भ देवेश पद्मनाभ जनार्दन ॥ हिरण्याक्ष गुणाधार सर्वरत्नमयेश्वर ॥ ३२ ॥ धनधान्यसमृद्धिं च सर्वदुःखविवर्जितम् ॥ पुत्रपौत्रादिसंयुक्तं दासीदाससमन्वितम् ॥ ३३ ॥ इत्थं प्रसाद्य देवेशं वासुदेवं सनातनम् ॥ दद्यात्तिलमयं पद्मं सर्वसंपत्समृद्धये ॥ ३४ ॥ एवं तिलमयं पद्मं यो ददाति विधानतः ॥ बहुजंतुसमाकीर्णं नरकं स न पश्यति ॥ ३५ ॥ स्वयं भवति पूतात्मा पितॄनथ पितामहान् ॥ आत्मानं चैव धर्मात्मा तारयत्यखिलं कुलम् ॥ ३६ ॥ धमार्थी धर्ममाप्नोति धनार्थी धनमाप्नुयात् ॥ मोक्षार्थी मोक्षमाप्नोति नात्र कार्या विचारणा ॥ ३७ ॥ ब्रह्महा मुच्यते पापात् पितृघ्नो गुरुतल्पगः ॥ सर्वपापरतो वापि मुच्यते नात्र संशयः ॥ ३८ ॥ इच्छंति पितरः पुत्रान्पौत्रांस्तद्वंशसंभवान् ॥ अस्मद्वंशे भवेत्कश्चित्तिलपद्मं प्रदास्यति ॥ ३९ ॥ यस्तु राजा धनपतिर्विश्रुतोऽतीव धार्मिकः ॥ आराध्य विप्रं विधिना वस्त्रालंकारभूषणैः ॥ ४० ॥ वाहनादिभिरन्यैश्च ग्रामक्षेत्रादिकैस्तथा ॥ यत्फलं जायते तस्य तिलदानरतस्य च ॥ परिच्छिन्नं भवेत्तस्य नात्र कार्या विचारणा ॥ ४१ ॥ यस्त्वेवं विधिना दद्यात्तिलपद्मं च धार्मिकः ॥ तस्य दानफलं यत्स्यात्तस्य चांतो न विद्यते ॥ ४२ ॥ वक्तुं न शक्तः पुरुषो बहुवर्षशतैरपि ॥ तिलपद्मस्य माहात्म्यमनन्त-

---

१ ददातीति शेषः ।

फलदं स्मृतम् ॥ ४३ ॥ तिला नित्यं प्रदातव्या यथाशक्ति द्विजोत्तमे ॥ नित्यदानात्सर्वकामान्प्राप्नुवंति न संशयः ॥ ४४ ॥ कृष्णाजिने तिलान्कृत्वा ससर्पिर्मधुकांचनान् ॥ यः प्रयच्छति विप्राय सोऽपि पापैः प्रमुच्यते ॥ ४५ ॥ सर्वात्मना च सततं देयं पानीयमेव च ॥ ग्रामे वा नगरे वापि मार्गे वै तोयवर्जिते ॥ प्रयत्नं कारयेद्भक्त्या स पुण्यां गतिमाप्नुयात् ॥ ४६ ॥ एतत्सुदुर्लभमिह मम लोके द्विजोत्तम ॥ तस्माद्वापीश्च कूपांश्च तडागानपि खानय ॥ ४७ ॥ शाला आपश्च कर्तव्या भूतानां हितकाम्यया ॥ ग्रामे वा नगरे वापि वने वा तोयवर्जिते ॥ ४८ ॥ अन्नं दत्त्वा तु संपूर्णं पात्रीकृतमकल्मषम् ॥ दधिमिश्रं घृताक्तं तु पायसं वा यथाविधि ॥ ४९ ॥ वातवर्षातपत्राणं छत्रं दद्याद्द्विजातये ॥ स सर्वव्याधिरहितः श्रियं पुत्रांश्च विंदति ॥ ५० ॥ गृहोपकरणं वापि गृहं वा सपरिच्छदम् ॥ वैवाहिकप्रदाने च यो ददाति दयापरः ॥ ५१ ॥ विचित्रेण विमानेन किंकिणीजालमालिना ॥ महेन्द्रभवनं याति सेव्यमानोऽप्सरोगणैः ॥ ५२ ॥ दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ॥ न तस्य ग्रीष्मजो दाहः कदाचिदपि जायते ॥ ५३ ॥ यानं वत्सतरीयुक्तं तस्य हेममयं शुभम् ॥ उपतिष्ठति विप्रेंद्र सर्वरत्नविभूषितम् ॥ ५४ ॥ यस्तापनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ॥ सर्वार्थास्तस्य सिध्यन्ति तेजस्वी चापि जायते ॥ ५५ ॥ हेमंते शिशिरे चैव पुण्याग्नीन्यः प्रयच्छति ॥ सर्वलोकप्रतापार्थं स पुण्यां गतिमाप्नुयात् ॥ ५६ ॥ तांबूलं च स्रजश्चैव स स्वर्गं लभते नरः ॥ तिलान्सुवर्णं पानीयं दीपमन्नं च यच्छति ॥ ५७ ॥ सतां स्वर्गार्थिनामेव समस्तेषु च वस्तुषु ॥ यद्यदिष्टतमं लोके यदन्यदुपकारकम् ॥ तत्तदेव द्विजातिभ्यः प्रदेयं हितमिच्छता ॥ ५८ ॥ भीष्म उवाच ॥ इत्युक्तो धर्मराजेन प्रीतात्मा स्वगृहं द्विजः ॥ आनीतो यमदूतेन यथोक्तं तेन चाकरोत् ॥ ५९ ॥ तस्मात्त्वमपि राजेन्द्र तिलदा-

नपरो भव ॥ तिलेभ्यः प्राप्यते सर्वं स्वर्गं मोक्षं च भारत ॥६०॥ वासुदेवं समुद्दिश्य सर्वदानानि भारत ॥ वैष्णवेभ्यः प्रयत्नेन दातव्यानि मनीषिभिः ॥ ६१ ॥

इति श्रीमदितिहाससमुच्चये तिलदानमहिमोपाख्यानं नाम द्वाविंशोऽध्यायः॥२२॥

## त्रयोविंशोऽध्यायः २३ ।

युधिष्ठिर उवाच ॥ अपहृत्य नरो यो गां ब्राह्मणाय प्रयच्छति ॥ तस्य पुण्यफलं यत्स्यात्तन्मे ब्रूहि पितामह ॥ १ ॥ भीष्म उवाच ॥ अपहृत्य नरो राजन् गां ददाति द्विजातये ॥ तस्य दानफलं नास्ति नरकं चैव गच्छति ॥ २ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ वासुदेवस्य संवादं नृगस्य च महात्मनः ॥ ३॥ निवसंति पुरा राजन्द्वारावत्यां च मानवाः ॥ सिद्धैः साध्यैश्च देवैश्च नरैः पुण्यकृतैः सह ॥४ ॥ तस्मिन्नेव हि देशे तु महान्कूपो व्यवस्थितः॥ अदृश्यत महारूपस्तृणवीरुत्समाकुलः ॥५ ॥ पुरातनेष्टकायुक्तः पाताल इव दुर्दृशः ॥ एकस्मिन्दिवसे तत्र यदुदेवकुमारकाः ॥ ६ ॥ सत्त्वं पतितमालोक्य बभूवुः करुणान्विताः ॥ तस्य चोद्धरणे यत्नं चक्रुस्ते चाप्यनेकशः ॥ ७॥ ते तु चर्ममयैः पाशैस्तं बद्धा पर्वतोपमम् ॥ नाशक्नुवन्समुद्धर्तुं ततः कृष्णं न्यवेदयन् ॥ ८ ॥ स वासुदेवेन समुद्धृतस्तदा पृष्टश्च तस्मै प्रणिपत्य राजन् ॥ निवेदयामास जनार्दनाय कथामयीं चात्ममयीं नृगाख्याम् ॥ ९ ॥ तथा ब्रुवाणं तमुवाच माधवः शुभं त्वया कर्म कृतं न पापकम् ॥ कथं भवान् दुर्गतिमीदृशीं गतः सहस्रसंख्यानियुतं तथायुतम् ॥१०॥ परं च कोटीशतमर्बुदोत्तरं त्वया पुरा दत्तमितीह शुश्रुम ॥ क्व तन्महादानफलं गतं तव त्वया यदीदृग्व्यसनं समाश्रितम् ॥ ११॥ नृग उवाच॥ द्विजस्य गौः परिभ्रष्टा समेता मम गोधनैः ॥ अजानता मया दत्ता विप्रस्यान्यस्य माधव ॥१२ ॥सोऽपश्यत्पथि गच्छंतीं तां गां पर-

गृहे द्विजः ॥ ममेयमिति चोवाच प्रथमं यस्य साभवत् ॥ १३॥ तावुभौ समनुप्राप्तौ विवदंतौ ममांतिके ॥ भवान्दातापहर्ता च मामेव पुनरूचतुः ॥ १४ ॥ ततः सहस्रसंख्येन गवां विनिमयेन तम् ॥ याचे प्रतिग्रही-तारं स तु मामब्रवीदिदम् ॥ १५ ॥ धन्या धेनुर्बहुक्षीरा सुरूपा बल-संयुता ॥ न सा शक्या मया त्यक्तुं संपीत्वा च पयो नृप ॥ १६ ॥ ततस्तमपरं विप्रं ययाचे नियमं प्रति ॥ गवां सहस्रं धेनूनां नियुतं प्रतिगृह्यताम् ॥ १७ ॥ ब्राह्मण उवाच ॥ न राजन् प्रतिगृह्णामि शक्तोऽहं स्वस्य कर्मणा ॥ सैषा गौ दीयतां मह्यमित्युक्त्वा मां स जग्मिवान् ॥ १८ ॥ नृग उवाच ॥ परस्परविवादेन स्पर्द्धाक्रांतौ द्विजोत्तमौ ॥ विगणय्य तु मां कृष्ण प्रयातौ स्वगृहं प्रति ॥ १९ ॥ एतस्मिन्नेव काले तु नोदितः कालकर्मणा ॥ यमलोकमितः प्राप्तो धर्म-राजमुपागतः ॥ २० ॥ ततः स पूजयित्वा मां प्रोवाच भगवान्यमः ॥ नांतः संख्यायते राजंस्तव पुण्यस्य कर्मणः ॥ २१ ॥ यावत्यः सिकता भूमौ यावत्यो दिवि तारकाः ॥ यावत्यो वर्षधाराश्च तावतीर्गा भवा-न्ददौ ॥ २२ ॥ अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ॥ तद्भुंक्ष्व पातकं पूर्वं पश्चादपि यथेच्छसि ॥ २३ ॥ शुभाशुभानां राजेंद्र नास्ति नाशो हि कर्मणाम् ॥ प्रायश्चित्तं मुनिप्रोक्तं तत्रैव कुरुते च यः ॥ तस्य तत्रैव तत्पापं विनाशमुपगच्छति ॥२४॥ अक्षयं भवतो पुण्यं न चास्ते क्षयकारकम् ॥ धर्मं भुक्त्वा तथा पूर्वं ततः पापमवाप्स्यसि ॥ २५ ॥ नृग उवाच ॥ प्राक् पापमुपभोक्ष्येऽहं पश्चाच्छुभमपि प्रभो ॥ रक्षतो न क्षयोऽस्य स्याद्भुंजानस्य क्षयोऽहसः ॥ २६ ॥ भोक्ष्येऽहं पापमेवाहं पूर्वं सज्जनगर्हितम् ॥ धर्मराजं ब्रुवन्नेवं पतितोऽस्मि महीतले ॥ २७ ॥ अश्रौषं पृष्ठतश्चाहं यमस्योच्चैः पुनः पुनः ॥ वासुदेवः समुद्धर्त्ता पापांते भविता तव ॥ २८ ॥ कूपे त्वहमथात्मानमपश्यं पतितं ततः ॥ तिर्य्यग्योनिमनुप्राप्तं न तु मामजहात्स्मृतिः ॥ २९ ॥ दानं स्वत्वनि-वृत्ते स्यात्परस्वत्वोपपादने ॥ विपरीतं ततः कृत्वा पतितं पश्य मां

विभो ॥ ३० ॥ त्वया तु तारितो ह्यद्य देवदेव जगत्पते ॥ दामोदर हृषीकेश पद्मनाभ जनार्दन ॥ ३१ ॥ नारायण सहस्राक्ष सर्वलोकपरायण ॥ अनुजानीहि मां कृष्ण गच्छामि त्रिदशालयम् ॥ ३२ ॥ ततस्त्रैलोक्यनाथेन सोऽनुज्ञातः प्रणम्य तम् ॥ दिव्यं विमानमारुह्य दिव्यरूपो दिवं ययौ ॥ ३३ ॥ अथ तस्मिन्दिवं याते विमानेन नृगे नृपे ॥ वासुदेवो जगादेदं स्वकुमाराञ्जगत्पतिः ॥ ३४ ॥ श्रीभगवानुवाच ॥ ब्राह्मणस्वं न हर्तव्यं पुरुषेण कदाचन ॥ ब्राह्मणस्वं हृतं हन्यान्नृगं ब्राह्मणगौरिव ॥ ३५ ॥ शतं गवां च यो दद्यादेकामपि हरेच्च यः ॥ वरमेका च नो दत्ता न तु दत्तं गवां शतम् ॥ ३६ ॥ ब्रह्मस्वेन तु पुष्टानि वाहनानि बलानि च ॥ विनाशमुपगच्छंति शनैर्मेघा इवांबरे ॥ ३७ ॥ महानपि दहन्वह्निः सलिलेन प्रशाम्यति ॥ ब्रह्मस्ववह्नेर्दहतः शमोपायो न विद्यते ॥ ३८ ॥ ब्रह्मस्वं प्रणयाद्भुक्तं दहत्या सप्तमं कुलम् ॥ विक्रमेण तु भुक्तं तद्दशपूर्वान्दशापरान् ॥ ३९ ॥ षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च ॥ ब्रह्मस्वहारी पुरुषो विष्ठायां जायते कृमिः ॥ ४० ॥ अश्मानमप्युपायेन लोहं वा जरयेन्नरः ॥ न तु कश्चिदुपायोऽस्ति ब्रह्मस्वं येन जीर्यति ॥ ४१ ॥ ब्रह्मस्वाद्दुर्जरतरं नान्यल्लोकेऽस्ति किंचन ॥ अमंत्रकमभैषज्यं तद्धि हालाहलं विषम् ॥ ४२ ॥ हालाहलादपि विषाद्ब्रह्मस्वं कष्टमुच्यते ॥ विषमेकाकिनं हंति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ४३ ॥ वने वनतरूनग्निर्दहन्मूलानि रक्षति ॥ कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ४४ ॥ तस्माद्दावाग्निवद्धाहि विषवच्च सुदुर्जरम् ॥ ब्रह्मस्वं नापहर्त्तव्यं पुरुषेण हितैषिणा ॥ ४५ ॥ भीष्म उवाच ॥ इत्युक्त्वा पुंडरीकाक्षो भगवान्भुवनेश्वरः ॥ पावनः सर्वभूतानां ययौ द्वारावतीं पुरीम् ॥ ४६ ॥ सद्भिः समागमः पार्थ कदाचिन्नाफलो भवेत् ॥ विमुक्तो नरकाद्राजा नृगः साधुसमागमात् ॥ ४७ ॥ साधूनां दर्शनं स्पर्शः कीर्तनं स्मरणं तथा ॥ तीर्थानामिव पुण्यानां सर्वमेवेह पावनम् ॥ ४८ ॥

एतज्ज्ञात्वा त्वया संत उपास्या हि प्रयत्नतः ॥ ब्रह्मस्वं न च हर्त्तव्यं यदीच्छसि परां गतिम् ॥ ४९ ॥ स्वमेव दद्यात्सुपरीक्ष्य धर्मवित्परस्वदानं हि परत्र नाशनम् ॥ द्विजोत्तमस्वं हरतः सुदुर्मतेर्विशेषतः कष्टगतिं विचिंतय ॥ ५० ॥

इति श्रीमदितिहाससमुच्चये नृगोपाख्यानं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः २४ ।

युधिष्ठिर उवाच ॥ साधूनां संगमे वासे के गुणाः परिकीर्तिताः ॥ महाभागवतानां यत्तद्ब्रूहि त्वं पितामह ॥ १ ॥ भीष्म उवाच ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ २ ॥ भार्गवश्च्यवनो नाम महर्षिः सुमहातपाः ॥ [१]उदवाससमारंभो बभूव किल भारत ॥ ३ ॥ निहत्य कामं क्रोधं च द्रोहं निद्रां मदं तथा ॥ गंगायमुनयोर्मध्ये विवेश सलिलाशये ॥ ४ ॥ तं गंगा यमुना चैव सरितश्चानुगास्तथा ॥ प्रदक्षिणमृषिं चक्रुर्न चैनं प्रत्यपीडयन् ॥ ५ ॥ ततः कदाचित्तं देशमगमन्मत्स्यजीविनः ॥ प्रसार्य्य जालं सुमहत्सर्वं चाचकृषुर्जलात् ॥ ६ ॥ अथ ते सह मत्स्यैस्तु निषादा बलदर्पिताः ॥ तस्मादुत्तारयामासुः सलिलाद्भृगुनंदनम् ॥ ७ ॥ तं दृष्ट्वा दीर्घतपसं कैवर्ता भयपीडिताः ॥ शिरोभिः प्रणिपत्योर्व्यामिदं वचनमब्रुवन् ॥ ८ ॥ कैवर्ता ऊचुः ॥ अज्ञानात्कृतपापानामस्माकं क्षंतुमर्हसि ॥ कुर्मः प्रियं तेऽद्य तस्मात्त्वमाज्ञापय पुत्रकान् ॥ ९ ॥ भीष्म उवाच ॥ स मुनिस्तन्महद्दृष्ट्वा मत्स्यानां कदनं कृतम् ॥ कृपया परयाविष्टस्तानुवाच सुदुःखितः ॥ १० ॥ मरणं विक्रयं वापि मत्स्यैर्यास्याम्यहं सह ॥ संवासान्नोत्सहे त्यक्तुं दीनानेतान्सुदुःखितान् ॥ ११ ॥ दुःखितानीह भूतानि पश्यन्दुःखैः पृथग्विधैः ॥ केवलात्महितेच्छो यः को नृशंसतरस्ततः ॥ १२ ॥ अहो सर्वेषु कारुण्यमात्मार्थं सुख-

१ उदकवासे समारम्भो यस्य सः ।

मिच्छताम् ॥ ज्ञानिनामपि यच्चैतत्केवलात्महितोद्यमः ॥ १३ ॥ ज्ञानिनोऽपि यदापार्थमाश्रित्य ध्यानमास्थिताः ॥ तदा संसारदुःखार्ताः कं यांति शरणं प्रजाः ॥ १४ ॥ अहो मीनाः स्फुरंत्येते लुठंति च तथा तथा ॥ बलिनोऽपि महाकायाः सूर्यांशुपरिपीडिताः ॥१५॥ दृष्ट्वा च बधिरव्यंगाननाथान्रोगिणस्तथा ॥ दया न जायते यस्य मूढः सोऽतीव मे मतः ॥ १६ ॥ प्राणसंशयमापन्नं प्राणिनं भयविह्वलम् ॥ यो न रक्षेत्समर्थः सन्स पापां गतिमाप्नुयात् ॥ १७ ॥ अपहृत्यार्तिं मत्स्यानां सुखं यदुपजायते ॥ तस्य स्वर्गोऽपवर्गो वा कलां नार्हति षोडशीम् ॥१८॥ तस्मादेतानहं दीनांस्त्यक्त्वा मीनान्सुदुःखितान् ॥ ब्रह्मणोऽपि पदं नोश्मः किं पुनस्त्रिदशालयम् ॥ १९ ॥ न करिष्ये च युस्माकमाशाच्छेदं कदाचन ॥ निवेदयत मां राज्ञः स च मूल्यं प्रदास्यति ॥ २० ॥ एवं निशम्य वचनं निषादा जातसंभ्रमाः ॥ गत्वा राज्ञे च तत्सर्वं नहुषाय न्यवेदयन् ॥ २१ ॥ इति संश्रुत्य धर्मात्मा धर्मभक्तिसमन्वितः ॥ भयेन च समाविष्टो मुनिप्रवरशंकया ॥ २२ ॥ विसृज्य सेनां तत्रैव राज्याश्रमपरिच्छदम् ॥ त्वरितः प्रययौ तत्र सहामात्यपुरोहितैः ॥ २३ ॥ स दृष्ट्वा सूर्यसंकाशं च्यवनं शंसितव्रतम् ॥ ज्ञात्वा भार्गवमेकाग्रं ध्यानयोगपरायणम् ॥ २४ ॥ स पूजयित्वा विधिवद्वेदकल्पं नराधिपः ॥ प्रोवाच भगवन्ब्रूहि किं करोमि तवाज्ञया ॥ २५ ॥ च्यवन उवाच ॥ श्रमेण महता युक्ताः कैवर्ता दुःखजीविनः ॥ मम तुल्यं प्रयच्छैभ्यो यथावद्राजसत्तम ॥ २६ ॥ तथा मूल्यप्रदानेन मत्स्यांस्त्वं धर्ममाश्रितः ॥ एभ्यो मुंच यथाकामं मा कार्षीस्त्वं ततोऽन्यथा ॥ २७ ॥ यथा मूल्यप्रदानेन करोम्यात्मविमोचनम् ॥ ततो मीनांश्च रक्षामि तन्मे मनसि निश्चितम् ॥ २८ ॥ नहुष उवाच ॥ सहस्राणां शतं मूल्यं निषादेभ्यः प्रदीयताम् ॥ निष्क्रयार्थं भगवतो यथाहं भृगुनंदन ॥ २९ ॥ च्यवन उवाच ॥ नाहं शतस-

हस्रेण निष्क्रेयः पार्थिव त्वया ॥ सदृशं दीयतां मूल्यममात्यैः परिचिंतय ॥ ३० ॥ नहुष उवाच ॥ किं वै प्रदीयते मूल्यं निषादेभ्यः पुरोहित ॥ यदेतदेव नो मूल्यं ततो भूयः प्रदीयताम् ॥ ३१ ॥ च्यवन उवाच ॥ आतममूल्यं न वक्तव्यं न तं लोकः प्रशंसति ॥ तस्मान्नाहं प्रवक्ष्यामि विद्वांश्च नात्मनः स्तुतिम् ॥ ३२ ॥ नाहं लक्षेण वा कोटचा ह्यर्थानामधिकैस्तथा ॥ सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिंतय ॥ ३३ ॥ नहुष उवाच ॥ अर्द्धराज्यं समस्तं वा निषादेभ्यः प्रदीयताम् ॥ एतन्मूल्यमहं मन्ये किमल्पं मन्यसे द्विज ॥ ३४ ॥ च्यवन उवाच ॥ अर्द्धराज्यं समस्तं वा नाहमर्हामि पार्थिव ॥ सदृशं दीयतां मूल्यं मुनिभिः सह चिंतय ॥ ३५ ॥ भीष्म उवाच ॥ महर्षेस्तद्वचः श्रुत्वा नहुषो भृशदुःखितः ॥ चिंतयामास दुःखार्तः सहामात्यपुरोहितैः ॥ ३६ ॥ गत्वा कश्चिदृषिस्तत्र गविजात इति श्रुतः ॥ प्रोवाच नहुषं मा भैस्तोषयिष्याम्यहं मुनिम् ॥ ३७ ॥ नहुष उवाच ॥ ब्रूहि त्वं भगवन्मूल्यं मुनेरस्य महात्मनः ॥ परित्रायस्व मामस्माद्विषयं ह्यतुलं च मे ॥ ३८ ॥ हन्युर्द्विजाः सुसंक्रुद्धास्त्रैलोक्यमपि सेश्वरम् ॥ किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम् ॥ ३९ ॥ गविजात उवाच ॥ तुल्या एते महाराज जगत्पूज्या द्विजोत्तमाः ॥ गावश्च देवास्तस्माद्गो-मूल्यमस्य प्रदीयताम्[१] ॥ ४० ॥ भीष्म उवाच ॥ तच्छ्रुत्वा वचनं राजा सहामात्यपुरोहितैः ॥ हर्षेण महताविष्टः प्रोवाचेदं वचो मुनिम् ॥ ४१ ॥ नहुष उवाच ॥ उत्तिष्ठोत्तिष्ठ विप्रेंद्र गवा क्रीतोऽसि भार्गव ॥ एतन्मूल्यमहं मन्ये तव धर्मभृतां वर ॥ ४२ ॥ च्यवन उवाच ॥ उत्तिष्ठाम्येष राजेंद्र सम्यं क्रीतोऽस्मि तेऽनघ ॥ गोभिस्तुल्यं न जानामि पवित्रं परमं भुवि ॥ ४३ ॥ गावः प्रदक्षिणीकार्या वंदनीयाश्च नित्यशः ॥ मंगलायतनं दध्युः[३] सृष्टा ह्येताः स्वयंभुवा ॥ ४४ ॥ अग्न्यागाराणि

---

१ आर्षः प्रयोगः । २ निषादेभ्य इति शेषः । ३ कुर्युरित्यर्थः ।

विप्राणां देवतायतनानि च ॥ दीप्यंते पयसा यासां किं भूतमधिकं ततः ॥ ४५ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च ॥ गवां पंच पवित्राणि पुनंति सकलं जगत् ॥ ४६ ॥ गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः ॥ गावो मे हृदये चैव गवां मध्ये वसाम्यहम् ॥ ४७ ॥ एतन्नरो जपन्मंत्रं त्रिसंध्यं नियतः शुचिः ॥ सर्वदुःखविनिर्मुक्तः सुखमत्यंतमश्नुते ॥ ४८ ॥ ग्रासमन्नं तृणैः सार्द्धं गवां दद्याच्चरुं सदा ॥ अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥ ४९ ॥ तेनाग्नयो हुताः सम्यक् पितरश्चैव तर्पिताः ॥ देवाश्च पूजिताः सर्वे यो दद्याद्ग्रासमात्रकम् ॥ ५० ॥ आदौ गावो हि यज्ञस्य मध्ये चांते च पार्थिव ॥ क्षरंति भागं देवानां क्षीराज्यममृतं सदा ॥ ५१॥ तस्माद्गावः प्रदातव्याः पूजनीयाश्च नित्यशः ॥ स्वर्गस्य संगमायैताः सोपानानीव निर्मिताः॥५२॥ भीष्म उवाच ॥ एतच्छ्रुत्वा निषादास्ते गवां माहात्म्यमुत्तमम् ॥ प्रणिपत्य महात्मानं ततस्तमृषिमब्रुवन् ॥ ५३ ॥ निषादा ऊचुः ॥ संभाषो दर्शनं स्पर्शः कीर्तनं स्मरणं तथा ॥ पावनानि किलैतानि साधूनामिति शुश्रुम ॥ ५४ ॥ संभाषो दर्शनं चैव सहास्माभिः कृतं त्वया ॥ प्रसीद भगवंस्तस्माद्गौरेषा प्रतिगृह्यताम् ॥ ५५ ॥ च्यवन उवाच ॥ एष वः प्रतिगृह्णामि गामेतां मुक्तकिल्बिषाः ॥ निषादा गच्छत स्वर्गं मत्स्यैः सार्द्धं जलोद्धृतैः ॥ ५६ ॥ यन्मया सुकृतं किंचिन्मनोवाक्कायकर्मभिः ॥ दुःखार्ता जंतवः सर्वे तेन संतु सुखान्विताः ॥ ५७ ॥ भीष्म उवाच ॥ ततस्तस्य प्रसादेन महर्षेर्भावितात्मनः ॥ निषादास्तेन वाक्येन सह कायैर्दिवं गताः ॥ ५८ ॥ तान्दृष्ट्वा व्रजतः स्वर्गं निषादान् मत्स्यजीविनः ॥ सामात्यभृत्यसहितो विस्मयं परमं ययौ ॥ ५९ ॥ सेव्याः श्रेयोऽर्थिभिः संतः पुण्यतीर्थजलाश्रयाः ॥ क्षणोपासनयोगोऽपि न तेषां निष्फलो भवेत् ॥ ६० ॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ॥ कालेन फलते तीर्थं सद्यः साधुसमा-

गमः ॥ ६१ ॥ अथर्षिश्च्यवनो धीमान् गविजातो महातपाः ॥ वराभ्यां च यथेच्छाभ्यां छंदयामासतुर्नृपम् ॥ ६२ ॥ ततः स वरयामास धर्मे बुद्धिं सुदुर्लभाम् ॥ तथेत्युक्त्वा ततः प्रीतौ तं नृपं प्रशशंसतुः ॥ ६३ ॥ अहो धन्योऽसि राजेंद्र यत्ते धर्मे धृता मतिः ॥ धर्मे धीर्दुर्लभा पुंसां विशेषेण महीक्षिताम् ॥ ६४ ॥ ध्रुवो राज्यान्मदो राज्ञां मोहश्चापि मदाद्ध्रुवः ॥ मोहाद्ध्रुवश्च नरको राज्यं निंदंत्यतो बुधाः ॥ ६५ ॥ राज्यं हि बहु मन्यंते नरा विषयलोलुपाः ॥ मनीषिणस्तु पश्यंति तदेव नरकोपमम् ॥ ६६ ॥ तस्माल्लोकद्वयध्वंसी न कर्तव्यो मदस्त्वया ॥ यदीच्छसि महाराज शाश्वतीं गतिमात्मनः ॥ ६७ ॥ किं तु लोकद्वयध्वंसी मदः परमदारुणः ॥ भविष्यति महाराज तव नैवात्र संशयः ॥ ६८ ॥ अतो हि मोक्ष्यसे राजन् प्रसादादावयोर्ध्रुवम् ॥ यस्मात्प्रार्थितवानावां धर्मे बुद्धिं सुदुर्लभाम् ॥ ६९ ॥ भीष्म उवाच ॥ इत्युक्त्वा तौ महात्मानौ जग्मतुः स्वस्वमाश्रमम् ॥ नहुषोऽपि वरं लब्ध्वा प्रहृष्टः प्राविशत्पुरम् ॥ ७० ॥ एतत्ते कथिता राजन्गुणाः सत्सु समागमे ॥ माहात्म्यं हि गवां चैव किं भूयः श्रोतुमिच्छसि ॥ ७१ ॥

इति श्रीमदितिहाससमुच्चये च्यवननहुषसंवादोपाख्यानं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः २५ ।

युधिष्ठिर उवाच ॥ मानसानीह तीर्थानि प्रशंसंति महर्षयः ॥ तानि मे कुरुशार्दूल यथावद्वक्तुमर्हसि ॥ १ ॥ भीष्म उवाच ॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ जनकस्य च संवादं रोमशस्य महात्मनः ॥ २ ॥ ऋषिः परमधर्मात्मा ध्यानयोगपरायणः ॥ तपस्वी सत्य-

संपन्नोऽज्ञातसंकल्पकल्मषः ॥ ३ ॥ तीर्थयात्रामनुचरन्रोमशो नाम नामतः ॥ कदाचित्प्राप्तवान् राजन् जनकस्य निवेशने ॥ ४ ॥ तं दृष्ट्वा जनको राजा रोमशं समुपस्थितम् ॥ पूजयित्वा यथान्यायमुपावेशयदासनम् ॥ ५ ॥ ततश्चावसरं लब्ध्वा प्रणिपत्य तपोनिधिम् ॥ पृष्टवानिममेवार्थं यन्मां त्वं परिपृच्छसि ॥ ६ ॥ मानसानीह तीर्थानि प्रशंसंति विपश्चितः ॥ विस्तरेण महाप्राज्ञ तानि त्वं वक्तुमर्हसि ॥ ७ ॥ रोमश उवाच ॥ शृणु तीर्थानि गदतो मानसानि ममानघ ॥ येषु सम्यङ्नरः स्नात्वा प्रयांति परमां गतिम् ॥ ८ ॥ ज्ञानं तीर्थं क्षमा तीर्थं तीर्थमिंद्रियनिग्रहः ॥ शमस्तीर्थं दया तीर्थं सत्यं तीर्थमथार्जवम् ॥ ९ ॥ दानं तीर्थं दमस्तीर्थं संतोषस्तीर्थमुच्यते ॥ ब्रह्मचर्यं परं तीर्थमहिंसा तीर्थमुच्यते ॥ १० ॥ अस्तेयं तु परं तीर्थमद्रोहस्तीर्थमुत्तमम् ॥ श्रद्धा तीर्थं धृतिस्तीर्थं तपस्तीर्थमुदाहृतम् ॥ तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥ ११ ॥ न जलाप्लुतदेहस्तु स्नात इत्यभिधीयते ॥ सुस्नातो यो दमस्नातः स तु शुद्धतमो मतः ॥ १२ ॥ यो लुब्धः पिशुनः क्रूरो नास्तिको विषयात्मकः ॥ सर्वतीर्थेष्वपि स्नातः पापो मलिन एव सः ॥ १३ ॥ न शरीरमलत्यागान्नरो भवति निर्मलः ॥ मानसैस्तु मलैर्मुक्तो भवत्यत्यंतनिर्मलः ॥ १४ ॥ नैव गच्छंति ते स्वर्गमविशुद्धमनोमलाः ॥ विषयेष्वपि संयोगान्मानसो मल उच्यते ॥ तेष्वेव च विरागो हि निर्मलत्वमुदाहृतम् ॥ १५ ॥ चित्तमंतर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ॥ शतशोऽथ जलैर्धौतं सुराभांडमिवाशुचिः ॥ १६ ॥ दानमिज्या तपः शौचं तीर्थं वेदाः श्रुतं तथा ॥ सर्वाण्येतानि तिर्थानि यदि भावोऽस्ति निर्मलः ॥ १७ ॥ निगृहीतेंद्रियग्रामो यत्र यत्र वसेन्नरः ॥ तत्र तत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १८ ॥ ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ॥ यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥ १९ ॥ ये भजंति जगद्योनिं

वासुदेवं जगद्गुरुम् ॥ न तेभ्यो विद्यते तीर्थमधिकं राजसत्तम ॥२०॥ ये च भागवतं स्नानं कुर्वंति विमलाशयाः ॥ तीर्थानामधिकं विद्धि सर्वपापापनोदकम् ॥ २१ ॥ यत्र रागादिरहिता वासुदेवपरायणाः ॥ तत्र सन्निहितो विष्णुर्वसंते[1] यत्र वैष्णवाः ॥ २२॥ न सुगंधैस्तथालेपैर्न पुष्पैः सुमनोहरैः ॥ सान्निध्यं कुरुते विष्णुर्यत्र संति न वैष्णवाः ॥२३॥ बलिभिश्चोपहारैश्च नृत्यगेयादिभिस्तथा ॥ नित्यमाराध्यमाप्नोति तत्र विष्णुर्नहृष्यति ॥२४॥ तस्मात्तेन महाभागा वैष्णवा वीतकल्मषाः ॥ पुनंति सकला लोकान् किं भूतमधिकं ततः ॥२५॥ शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा ॥ सामान्येनेक्षते यस्तु स याति नरकं नरः ॥२६॥ तस्माद्विष्णुप्रसादाय वैष्णवान्परितोषयेत् ॥ प्रसादसुमुखो विष्णुस्तेनैव स्यादसंशयः ॥२७॥ एतत्ते कथितं राजन्मानसं तीर्थलक्षणम् ॥ भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु ॥ २८ ॥ यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ॥ तथा भूमेरपि प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ॥ २९ ॥ प्रभावादद्भुताद्भूमेः सलिलस्यैव तेजसा ॥ परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ॥ ३० ॥ तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः ॥ उभयेष्वपि यः स्नातः स शीघ्रं सिद्धिमृच्छति ॥ ३१ ॥ भीष्म उवाच ॥ इत्येवमुक्त्वा नृपतिं महामतिर्यथागतं स प्रययौ महायशाः ॥ तथैव कृत्वा जनको महामतिः प्रयातवान्सिद्धिमितोऽन्यदुर्लभाम् ॥ ३२ ॥ न चैव तीर्थानि तथैव भूपते न चैव दानं न तपो न सत्क्रियाः ॥ यदा प्रसन्नं हृदयं सुनिर्मलं तदास्य सर्वाणि फलंति नान्यथा ॥ ३३ ॥

इति श्रीमदितिहाससमुच्चये मानसतीर्थोपाख्यानं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

१ आत्मनेपदमार्षम् ।

# षड्विंशोऽध्यायः २६ ।

युधिष्ठिर उवाच ॥ अहत्वा ब्राह्मणान्येन कर्मणा ब्रह्महा भवेत् ॥ एतन्मे पृच्छतस्तात यथावद्वक्तुमर्हसि ॥ १ ॥ भीष्म उवाच ॥ इममर्थं मया पृष्टः कृष्णद्वैपायनो मुनिः ॥ यदसौ कथयामास तन्मे निगदतः शृणु ॥ २ ॥ ब्राह्मणं स्वयमाहूय याचमानमकिंचनम् ॥ पश्चान्नास्तीति यो ब्रूयात्तं विद्याद्ब्रह्मघातकम् ॥ ३ ॥ अधर्मे निरतो मूढो मिथ्यायोगो द्विजातिषु ॥ दद्यान्मर्मादिकं दोषं तं विद्याद्ब्रह्मघातकम् ॥ ४ ॥ आत्मजां गुणसंपन्नां महतीं सदृशे वरे ॥ न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मघातकम् ॥ ५ ॥ न्यायेनोपार्जितं वित्तं विप्रस्य हरते च यः ॥ स्वाध्यायव्रतयुक्तस्य तं विद्याद्ब्रह्मघातकम् ॥ ६ ॥ गोकुलस्य तृषार्त्तस्य जलार्थमभिधावतः ॥ उत्पादयति यो विघ्नं तं विद्याद्ब्रह्मघातकम् ॥ ७ ॥ पंगोरंधस्य दीनस्य व्याधितस्य जडस्य च ॥ हरेच्च यो वै सर्वस्वं तं विद्याद्ब्रह्मघातकम् ॥ ८ ॥ यः प्रसिद्धां श्रुतिं सत्यां शास्त्रं वा मुनिभिः कृतम् ॥ यो दूषयेदभिज्ञानं तं विद्याद्ब्रह्मघातकम् ॥ ९ ॥ नास्तिको भिन्नमर्यादो देवब्राह्मणदूषकः ॥ धर्मनिंदापरो नित्यं तं विद्याद्ब्रह्मघातकम् ॥ १० ॥ यो दूषयति संमोहाद्वासुदेवं जगत्पतिम् ॥ सर्वलोकस्य कर्त्तारं तं विद्याद्ब्रह्मघातकम् ॥ ११ ॥ मातृवत्परिरक्षंतं सृष्टिसंहारकारकम् ॥ यो नार्चयाति गोविंदं तं विद्याद्ब्रह्मघातकम् ॥ १२ ॥ क्षुधासंतप्तदेहानां द्विजानां भोक्तुमिच्छताम् ॥ यः समाचरते विघ्नं तं विद्याद्ब्रह्मघातकम् ॥ १३ ॥ वने वने तृणाहारा प्राणिनोऽनपराधिनः ॥ हंतुमिच्छति यो मोहात्तं विद्याद्ब्रह्मघातकम् ॥ १४ ॥ पिशुनो यश्च लोकानां रंध्रान्वेषणतत्परः ॥ उद्वेगजनकः क्रूरस्तं विद्याद्ब्रह्मघातकम् ॥ १५ ॥ साक्षी जन-

---

१ आत्मनेपदमार्षम् ।

स्तथापृष्टः साक्षित्वं योऽन्यथा वदेत् ॥ लोभाद्द्वेषाद्भयाद्वापि तं विद्याद्ब्रह्मघातकम् ॥ १६ ॥ गोव्रजे वा वने वापि ग्रामे वा नगरेऽपि वा ॥ योऽग्निं समुत्सृजेन्मूढस्तं विद्याद्ब्रह्मघातकम् ॥१७॥ मातरं पितरं चैव विकलं नेत्रदुर्बलम् ॥ न यो वै भरते पुत्रस्तं विद्याद्ब्रह्मघातकम् ॥१८॥ ये कुर्वंति च भूतानां प्रतिकूलं विहिंसकाः ॥ ब्रह्महत्यामकृत्वा च ब्रह्महत्यामवाप्नुयुः ॥ १९ ॥ गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ॥ यन्न भूतहितार्थाय तत्पशोरिव चेष्टितम् ॥ २० ॥ एतत्ते सर्वमाख्यातं मया तत्वेन भारत ॥ अहत्वैव यथा पापं ब्रह्महा पुरुषो भवेत् ॥२१॥ युधिष्ठिर उवाच ॥ ब्राह्मणेभ्यः प्रतिश्रुत्य ये नरा लोभमोहिताः ॥ न प्रयच्छंति ते प्रेत्य किं भवंति पितामह ॥ २२ ॥ भीष्म उवाच ॥ प्रतिश्रुत्य न यो दद्यात्स्वल्पं वा यदि वा बहु ॥ आशा तस्य हता हंति क्लीबवृत्तिरिव प्रजाः ॥ २३ ॥ जन्मप्रभृति यच्चापि तेन स्यात्सुकृतं कृतम् ॥ सर्वं गच्छति तत्तस्य येनाशा विफलीकृता ॥ २४ ॥ ब्राह्मणस्याशया पूर्वं क्षतया पृथिवीपते ॥ सुसमिद्धिर्यथा दीप्तः पावकः स द्विजः स्मृतः ॥ २५ ॥ यन्निरीक्षयते क्रुद्ध आशया परया युतः ॥ निर्दहेत्स हि तं पापं वृक्षं तु हुतभुग्यथा ॥ २६ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ शृगालस्य च संवादं वानरस्य च भारत ॥ २७ ॥ श्रूयते हि महाराज वैश्यौ धनसमन्वितौ ॥ एकस्यामेव संजातौ जातौ च महतां कुले ॥ २८ ॥ तौ सखायौ पुरा ह्यास्तां मानुषत्वे परंतप ॥ अन्यजातिमनुप्राप्तौ शार्गालीं वानरीं प्रभो ॥ २९ ॥ ततो गतासून्खादंतं शृगालं वीक्ष्य वानरः ॥ श्मशानमध्ये प्रोवाच पूर्वजातिमनुस्मरन् ॥ ३० ॥ किं त्वया पातकं कर्म कृतं पूर्वं सुदारुणम् ॥ येन श्मशानमृतकान्पूतिकानत्सि देहिनः ॥ ३१ ॥ शृगाल उवाच ॥ ब्राह्मणेभ्यः प्रतिश्रुत्य न प्रदत्तं पुरा मया ॥ ततः शृगालतां प्राप्तो गतासून् भक्षयाम्यहम् ॥ ३२ ॥ एतन्मया ते

कथितं शृगालोऽहं यथाभवम् ॥ त्वं तु वानरतां प्राप्तः कर्मणा येन तद्वद ॥ ३३ ॥ वानर उवाच ॥ पारक्याणि पुरा लोके फलान्युपहृतानि मे ॥ तेनाहं स्तेयदोषेण वानरत्वमुपागतः ॥ ३४ ॥ भीष्म उवाच ॥ एवं तौ कथयित्वा तु कर्मदोषौ परस्परम् ॥ शृगालो वानरश्चैव प्रतियातौ यथातथम् ॥ ३५ ॥ यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ॥ अवश्यं याति तिर्यक्त्वं मा ते भूदत्र संशयः ॥ ३६ ॥ तस्मात्प्रतिश्रुतं यस्य देयं विप्रस्य पार्थिव ॥ परस्वं च न हर्तव्यं यदीच्छसि परां गतिम् ॥ ३७ ॥

इति श्रीमदितिहाससमुच्चये शृगालवानरसंवादोपाख्यानं नाम षड्विंशोऽध्यायः २६॥

## सप्तविंशोऽध्यायः २७।

युधिष्ठिर उवाच ॥ प्रायशः पुरुषा लोके नृशंसाः प्राणिहिंसकाः ॥ मांसेषु गृध्रा दृश्यंते रौद्रा रक्षोगणा इव ॥ १ ॥ तथैव विविधाहाराञ्छाकानि च वराणि च ॥ नेक्षुक्षीरविपाकांश्च यथेच्छंत्यामिषं जनाः ॥ २ ॥ नान्यत्स्वादुतरं लोके किंचिदस्तीति ते विदुः ॥ ओजःकांतिकरं चैव न रोगार्तिहरं तथा ॥ ३ ॥ तस्य ये भक्षणे दोषा मुनिभिः परिकीर्तिताः ॥ विभज्यंते गुणाश्चैव वक्तुमर्हसि तान्मम ॥ ४ ॥ भीष्म उवाच ॥ अहो न खलु शोच्यास्ते नरा विषयलोलुपाः ॥ सर्वदोषकरे मांसे मूढाः पश्यंति ये गुणान् ॥ ५ ॥ आस्वादस्य हि सर्वस्य जिह्वाग्रे क्षणसंगमः ॥ कंठनाडीमतीतस्य सर्वं चैवासमं समम् ॥ ६ ॥ यदलं भुज्यते स्वादु कष्टं कदशनं च यत् ॥ तयोः संप्राप्तयोः कोष्ठं विपाकः सदृशः स्मृतः ॥ ७ ॥ रसनाशनसंयोगक्षणानंदविमोहिताः ॥ बडिशेन यथा मीना विनाशं यांति बालिशाः ॥ ८ ॥ न मांसमायुषो हेतुर्नारोग्यस्य न चौजसः ॥ दैवं कारणमेतेषां साक्षादेवेह दृश्यते ॥ ९ ॥ मांसा-

शिनश्च दृश्यंते रोगार्त्ता भृशदुर्बलाः ॥ अमांसादा निरोगाश्च बलवंतः सुखान्विताः ॥१०॥ किं स्वादु दुष्कृताविष्टा नास्तिका विषयात्मकाः॥ भक्षयंति नरा मांसं नृशंसा राक्षसा इव ॥ ११ ॥ ये भक्षयंति मांसानि सत्त्वानां जीवितैषिणाम् ॥ भक्ष्यंते तेऽपि तैः सर्वैरिति ब्रह्मावदत्स्वयम् ॥ १२ ॥ मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ॥ एतन्मांसस्य मांसत्वं प्रवदंति मनीषिणः ॥ १३ ॥ न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते ॥ हत्वा जंतून्भवेन्मांसं तस्मात्तत्परिवर्जयेत् ॥ १४ ॥ एतदेव हि पर्याप्तं मांसस्य परिवर्जनम् ॥ यदंगं दूयते तस्य कंटकेनापि विक्षतम् ॥ १५ ॥ एकस्य क्षणिका तृप्तिरेकः प्राणैर्विमुच्यते ॥ अहो मांसस्य दौरात्म्यं प्रत्यक्षमपि दृश्यते ॥ १६ ॥ आत्मोपमेषु भूतेषु समं पश्यति यः सदा ॥ सुखं वा यदि वा दुःखं स याति परमां गतिम् ॥ १७ ॥ उद्वेजयति योऽरण्ये प्राणिनो दुःखजीविनः ॥ उद्विग्नवासा वसाति यत्र यत्राभिजायते ॥१८॥ नरकेषु विपच्यंते रौद्राः प्राणिविहिंसकाः ॥ उद्वेजयंति भूतानि यथा व्याला ग्रसन्ति ते ॥ १९ ॥ यावंति पशुरोमाणि तावद्वर्षाणि मारकः ॥ वृथा पशुघ्न आप्नोति प्रेत्य जन्मनि जन्मनि ॥२०॥ हंता चैवानुमंता च विशस्ताक्रयिविक्रयी ॥ संस्कर्ता चोपकर्ता च खादकश्चाष्ट घातकाः ॥ २१ ॥ धनाय क्रयको हंति चोपभोगाय खादकः ॥ घातुको धनबंधैश्च इत्येषां त्रिविधो वधः ॥२२॥ स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ॥ नारदः प्राह धर्मात्मा नरके स विपच्यते ॥ २३ ॥ समुत्पत्तिश्च मांसस्य वधबंधाद्धि देहिनाम् ॥ प्रसमीक्ष्याभिवर्त्तेत सर्वमांसस्य भक्षणात् ॥ २४ ॥ यदापि वनजातेन शाकेनापि प्रपूर्य्यते ॥ तस्य चैवोदरस्यार्थे कः कुर्यादसमंजसम् ॥ २५ ॥ ऋषीणामनुसंवादो बभूव बहुशः पुरा ॥ तेषां

१ क्रयिणा सहितो विक्रयीति यथाकथंचित्। यदा तु समाहारस्तदा नपुंसकत्वाद्ध्रस्वः।

यन्निश्चितं चापि तच्छृणुष्व नराधिप ॥ २६ ॥ योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ॥ कृष्णद्वैपायनः प्राह स्थावरत्वं स गच्छति ॥ २७ ॥ स तप्यंति तपोऽजस्रं यजते च ददाति च ॥ मधुमांसान्निवृत्तो यः प्रोवाचेदं बृहस्पतिः ॥ २८ ॥ यावज्जीवं तु यो मांसं विषवत्परिवर्ज्जयेत् ॥ वशिष्ठो भगवानाह स्वर्गलोकं स गच्छति ॥ २९ ॥ यो भक्षयित्वा मांसानि पश्चादपि निवर्त्तते ॥ जमदग्निर्जगादेदं सोऽपि स्वर्गतिमाप्नुयात् ॥ ३० ॥ रूपमारोग्यमैश्वर्यं श्रुतिं स्वर्गतिमेव च ॥ प्राप्नोत्यहिंस्रः पुरुषः प्राहेदमुशना मुनिः ॥ ३१ ॥ सुवर्णदानं गोदानं भूमिदानं तथैव च ॥ नानुत्तमं प्राणदानादित्युवाच पराशरः ॥ ३२ ॥ एष धर्मो समाख्यातो मार्कंडेयेन पार्थिव ॥ मनुना चापि यत्प्रोक्तं तदिदानीं ब्रवीमि ते ॥ ३३ ॥ कर्मणा मनसा वाचा यो हिनस्ति न किंचन ॥ तं मित्रभूतं भूतानां मनुः स्वायंभुवोऽब्रवीत् ॥ ३४ ॥ शाकमूलफलैर्मेध्यैर्यः कालं क्षिपते भृशम् ॥ स तत्फलमवाप्नोति नात्र कार्या विचारणा ॥ ३५ ॥ मधु मांसं च ये नित्यं वर्जयंतीह मानवाः ॥ जन्म प्रभृति मत्स्यांश्च सर्वे ते मुनयः स्मृताः ॥ ३६ ॥ गोमूत्रयावकाहारो यस्तिष्ठेच्छरदां शतम् ॥ न भक्षयेच्च यो मांसममांसादस्तयोर्वरः ॥ ३७ ॥ वधबंधपरिक्लेशं प्राणिनां न करोति यः ॥ सर्वस्य च हितं प्रेप्सुः सुखमत्यंतमश्नुते ॥ ३८ ॥ भेरीशंखमृदंगानां वल्लकीनां च निःस्वनम् ॥ निषेविष्यंति वै मंदा मांसभक्षाः कथं दिवि ॥ ३९ ॥ यस्तु वर्षशतं साग्रं तपस्तपति दारुणम् ॥ न भक्षयति यो मांसं समावेतावुदाहृतौ ॥ ४० ॥ यस्तु वर्जयते मांसं मांसादः पक्षयोरपि ॥ सोऽपि स्वर्गमवाप्नोति किमुतात्यंतवर्जनात् ॥ ४१ ॥ यथा नागपदेऽन्यानि पदानि पदमाविशन् ॥ सर्वधर्मास्तथा राजन्विधीयंते त्वहिंसया ॥ ४२ ॥ तिर्यग्योनिसहस्रेषु प्राप्य जन्म पुनः पुनः ॥ अंत्यजातिषु

१ इयन्नार्षः। २ परस्मैपदमार्षम्।

जायंते पुरुषाः प्राणिहिंसकाः ॥ ४३ ॥ वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ॥ मांसं न भक्षयेद्यस्तु तयोः पुण्यफलं समम् ॥४४॥ यदि चिंतयते कार्यं दुष्प्राप्यमपि मानवः ॥ तत्प्राप्नोत्यप्रयत्नेन यो हिनस्ति न कंचन ॥ ४५ ॥ कामगेन विमानेन दिव्यस्त्रीशतसेवितः ॥ देववन्मोदते स्वर्गे नरो मांसविवर्जनात् ॥ ४६ ॥ ध्यानयोगपरा नित्यं यां गतिं यांति योगिनः ॥ तथैव याति तां मर्त्यः सर्वभूतदयापरः ॥ ४७॥ आत्मा विष्णुः समस्तानां वासुदेवो जगत्पतिः ॥ तस्मान्न वैष्णवैः कार्या परहिंसा विशेषतः ॥४८॥ सर्वभूतहितं धर्ममेतदातिष्ठतः सदा ॥ ब्रह्मभूतस्य विप्रस्य स्पृहयंति दिवौकसः ॥ ४९ ॥ सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ॥ सर्वयज्ञफलं चैव नैव तुल्यमहिंसया ॥ ५० ॥ अहिंसा परमं दानमहिंसा परमो दमः ॥ अहिंसा परमो यज्ञस्तथाहिंसा परं श्रुतम् ॥ ५१ ॥ अहिंसा परमो धर्मस्तथाहिंसा परं तपः ॥ अहिंसा परम ज्ञानमहिंसा परमार्जवम् ॥ ५२ ॥ अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा ॥ अहिंस्रः सर्वभूतानां यथा माता यथा पिता ॥ ५३ ॥ जीवितानित्यमन्यंतो[1] बहवः साधवो जनाः ॥ स्वमांसैः परमांसानि परिपाल्य दिवं गताः ॥ ५४ ॥ तमेवानुत्तमं धर्ममहिंसालक्षणं स्मृतम् ये चरंति महात्मानो विष्णुलोकं व्रजंति ते ॥५५॥ एतदाराधनं विष्णोः समुद्दिश्य चरन्ति ये ॥ तेषां तु विष्णुसायुज्यं नृपते नात्र संशयः ॥ ५६ ॥ एतत्ते कथितं सर्वमहिंसागुणलक्षणम् ॥ समस्तानि न शक्यंते वक्तुं वर्षशतैरपि ॥ ५७ ॥ धर्माख्यानमिदं पुण्यं सर्वभूतसुखावहम् ॥ यः पठेच्छृणुयाद्वापि स गच्छेत्परमां गतिम् ॥ ५८ ॥ न मांसमद्यैः पुरुषार्थसाधनं वृथैव वध्यः पशुरस्ति दुष्कृतम् ॥ न जीवदानात्परमस्ति दानं तथाप्यहिंसाविमुखा विपश्चितः ॥ ५९ ॥

इति श्रीमदितिहाससमुच्चये मांसभक्षणनिषेधोपाख्यानं नाम सप्तविंशोऽध्यायः २७॥

---

१ जीवितसम्बन्ध्यनित्यत्वं मन्यमाना इत्यर्थः ।

# अष्टाविंशोऽध्यायः २८।

जनमेजय उवाच ॥ कथं नागायुतप्राणो भीमो भीमपराक्रमः ॥ जगाम सर्पस्य वशं तन्मे ब्रूहि तपोधन ॥ १॥ वैशंपायन उवाच ॥ यदृच्छया कदाचित्स खड्गबाणधनुर्द्धरः ॥ चचार मृगयामेको वने तस्मिन्वृकोदरः ॥ २ ॥ सशैलशिखराकारं कस्मिंश्चिद्गिरिगह्वरे ॥ ददर्शाजगरं ग्राहं मूर्तिमंतमिवांतकम् ॥ ३ ॥ स तत्र भीममभ्येत्य भुजगो दैवनोदितः ॥ वेष्टयामास कायेन निश्चेष्टमकरोद्बली ॥ ४ ॥ एतस्मिन्नेव काले तु धर्मराजस्य धीमतः ॥ घोररूपा महोत्पाताः समुत्तस्थुः समंततः ॥ ५ ॥ तान्दृष्ट्वा सुमहोत्पातानुत्थितान्भयशंसिनः ॥ भ्रातॄन्विलोकयामास नापश्यच्च वृकोदरम् ॥ ६ ॥ ततोऽर्जुनं समादिश्य द्रौपद्या रक्षणं प्रति ॥ नकुलं सहदेवं च संप्रतस्थे युधिष्ठिरः ॥ ७ ॥ स तस्य जंघापवनभग्नपादपसंकुलम् ॥ मार्गं जगाम वेगेन धौम्येन सहितस्तदा ॥ ८ ॥ गत्वा तु राजराजेंद्रो ददर्श गिरिकंदरे ॥ भ्रातरं भुजगेंद्रेण गह्वने परिवेष्टितम् ॥ ९ ॥ ततः स शोकदुःखार्तो भीमं पप्रच्छ पांडवः ॥ कथमेव त्वया प्राप्तः को वायं भुजगोत्तमः ॥ १० ॥ एवं दुःखपरीतेन भ्रात्रा पृष्टो वृकोदरः ॥ यथावत्तस्य तत्सर्वं कथयामास चेष्टितम् ॥ ११ ॥ तच्छ्रुत्वा धर्मराजस्तु भीमसेनस्य भाषितम् ॥ पप्रच्छाजगरं साम्ना कुतूहलसमन्वितः ॥ १२ ॥ युधिष्ठिर उवाच ॥ देवो वा मानुषो वापि कस्त्वं कथय पन्नग ॥ किमर्थं तु गृहीतस्ते भ्रातायमनुजो मम ॥ १३ ॥ पन्नग उवाच ॥ नहुषो नाम राजाहं पूर्वेषां पूर्वजस्तव ॥ प्रथितः पंचमः सोमादायोर्वंशकरः सुतः ॥ १४ ॥ तपोभिः क्रतुभिश्चापि विद्ययाभिजनेन च ॥ त्रैलोक्यैश्वर्यमतुलं प्राप्तं मे विक्रमेण च ॥ १५ ॥ अथ सर्वमदोन्मादो मदो मां समुपाविशत् ॥ सहस्रं मुनिमुख्यानामुवाह शिबिकां मम ॥ १६ ॥ प्रसंगकुपितो राजन्म-

द्दोषेण गरीयसा ॥ अगस्त्यो लोकविख्यातो प्रदीप्त इव पावकः ॥१७॥ तेन विभ्रंशितश्चाहमगस्त्येन महात्मना ॥ ईदृशीं प्रापितोऽवस्थां पश्य दैवबलादहम् ॥१८॥ न दैवं प्रज्ञया तात न बलोत्साहशक्तिभिः ॥ न साहसबलैर्वापि कश्चिच्छक्तोऽतिवार्तितुम् ॥ १९ ॥ न दैवस्यातिभारोऽस्ति सुखदुःखोपपादने ॥ यदहं देवराजत्वात्क्षणेनोरगतां गतः ॥ २०॥ यदि प्रज्ञा च शौर्यं च संपदः कारणं भवेत् ॥ प्रज्ञावतां च शूराणां न कदाचिदसंपदः ॥२१॥ यदा शूराश्च प्राज्ञाश्च दृश्यंते दुःखजीविनः ॥ भीरवोऽज्ञाश्च सुखिनस्तस्माद्दैवं हि कारणम् ॥२२॥ पततश्च विमानान्मे मुनीनां मुनिसत्तमः ॥ कृपां कुरु त्वमित्युक्तः प्रोवाचेदं दयान्वितः ॥२३॥ यस्तव व्याहृतान्प्रश्नान्प्रवक्ष्यति च धर्मवित् ॥ स त्वां मोचयिता शापात्कस्मिंश्चित्कालपर्यये ॥ २४ ॥ मम प्रसादेन तव स्मृतिभ्रंशो न वै नृप ॥ बलं स्यादपरिक्षीणं भुजगत्वेऽपि पूर्ववत् ॥ २५ ॥ बलवानपि जंतुश्च गृहीतो वशमेष्यति ॥ त्वया च सह संयोगो मत्प्रसादाद्भविष्यति ॥ २६ ॥ इत्येवं वदतस्तस्य महर्षेर्भावितात्मनः ॥ अपश्यं पतितो भूमौ भुजगत्वमुपागतम् ॥२७॥ यदि मे व्याहृतान्प्रश्नाञ्छंसेस्त्वं नृपसत्तम ॥ ततो भ्रातरमेनं ते मोचयिष्यामि नान्यथा ॥२८॥ युधिष्ठिर उवाच ॥ ब्रूहि चापि यथाकामं त्वं प्रश्नान्माचिरं कृथाः ॥ यथाज्ञानमहं तांस्ते प्रतिवक्ष्यामि शक्तितः ॥२९॥ नहुष उवाच ॥ धर्मं सर्वे प्रशंसंति देवा ब्रह्मर्षयस्तथा ॥ तस्मात्सनातनं धर्मं कथयस्व ममानघ ॥३०॥ युधिष्ठिर उवाच ॥ सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमार्जवम् ॥ ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः ॥ ३१ ॥ नहुष उवाच ॥ सन्तोषः कः परः प्रोक्तः का च ह्रीः परिकीर्तिता ॥ क्षमा च का परा प्रोक्ता किं चार्जवमुदाहृतम् ॥ ३२ ॥ किं सत्यं प्रोच्यते राजन्को दमः परिकीर्तितः ॥ तपः किंलक्षणं प्रोक्तं किं तच्छौचमुदाहृतम् ॥ ३३ ॥ युधिष्ठिर उवाच ॥ सत्यं भूतहितं प्रोक्तं

मनसो दमनं दमः ॥ तपः स्वधर्मवर्तित्वं शौचं संकरवर्जितम् ॥ ३४ ॥ संतोषो विषयत्यागो ह्रीरकार्यनिवर्त्तनम् ॥ क्षमा द्वंद्वसहिष्णुत्वमार्जवं समचित्तता ॥ ३५ ॥ नहुष उवाच ॥ किं ज्ञानं प्रोच्यते राजन्कः शमः परिकीर्तितः ॥ दया च का परा प्रोक्ता किं तद्ध्यानमुदाहृतम् ॥३६॥ युधिष्ठिर उवाच ॥ ज्ञानं तत्वार्थसंबंधः शमश्चित्तप्रशांतता ॥ दया सर्वसुखैषित्वं ध्यानं निर्विषयं मनः ॥ ३७ ॥ नहुष उवाच ॥ कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनंतकः ॥ कीदृशस्तु स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥ ३८ ॥ युधिष्ठिर उवाच ॥ क्रोधस्तु दुर्ज्जयः शत्रुर्लोभो व्याधिरनंतकः॥ सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥३९॥ नहुष उवाच ॥ को मोहः प्रोच्यते राजन्कश्च मानः प्रकीर्तितः ॥ किमालस्यं च विज्ञेयं कश्च शोक इहोच्यते ॥४०॥ युधिष्ठिर उवाच ॥ मोहो हि धर्ममूढत्वं मानः स्वात्माभिमानता ॥ धर्मस्य निष्क्रियालस्यं शोकस्त्वज्ञानमुच्यते ॥ ४१ ॥ नहुष उवाच ॥ किं स्थैर्य्यमृषिभिः प्रोक्तं किं तद्धैर्यमुदाहृतम् ॥ स्नानं च किं परं प्रोक्तं किं च दानमिहोच्यते ॥ ४२॥ युधिष्ठिर उवाच ॥ स्वधर्मे स्थिरता स्थैर्य्यं धैर्य्यमिंद्रियनिग्रहः ॥ स्नानं मनोमलत्यागो दानं त्वभयदक्षिणा ॥ ४३ ॥ नहुष उवाच ॥ कः पंडितः पुमाञ्ज्ञेयः कश्च मूर्खो जनेश्वर ॥ संसारहेतुः कश्च स्याद्धृत्तापः कः परः स्मृतः ॥ ४४ ॥ युधिष्ठिर उवाच ॥ धर्मात्मा पंडितो ज्ञेयो नास्तिको मूर्ख उच्यते ॥ कामः संसारहेतुः स्याद्धृत्तापो मत्सरः स्मृतः ॥ ४५ ॥ नहुष उवाच ॥ कोऽहंकार इति प्रोक्तः कश्च दंभः प्रकीर्तितः ॥ अभ्यसूया च का प्रोक्ता किं तत्पैशून्यमुच्यते ॥ ४६ ॥ युधिष्ठिर उवाच ॥ मोहोऽज्ञानमहंकारो दंभो धर्मध्वजोच्छ्रयः ॥ गुणदोषो ह्यसूया[1] च पैशून्यं परदूषणम् ॥ ४७ ॥ नहुष उवाच ॥ धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ॥ एषां नित्यविरोधि-

१ गुणेषु दोषारोपणमित्यर्थः ।

त्वात्कथं स्यात्संगमः सदा ॥ ४८ ॥ युधिष्ठिर उवाच ॥ सदा भर्ता च भार्या च परस्परवशानुगौ ॥ तदा धर्मार्थकामानां त्रयाणामपि संगमः ॥ ॥ ४९ ॥ नहुष उवाच ॥ अक्षयो नरकः कस्य प्रोच्यते भरतर्षभ ॥ एतन्मे पृच्छतः प्रश्नं यथावद्वक्तुमर्हसि ॥ ५० ॥ युधिष्ठिर उवाच ॥ ब्राह्मणं स्वयमाहूय याचमानमकिंचनम् ॥ पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत् ॥ ५१ ॥ उद्दिष्टश्चैव यः साक्षी त्वनृतं वक्ति मानवः॥ स्नेहेन लोभमोहाभ्यां सोऽक्षयं नरकं व्रजेत् ॥ ५२ ॥ यः क्षत्रियादिको वर्णो ब्राह्मणीगमने रतः ॥ तमसावृतचेतास्तु सोऽक्षयं नरक व्रजेत् ॥ ॥ ५३ ॥ अध्वश्रांतमविज्ञातमतिथिं क्षुत्पिपासितम् ॥ यो न पूजयते शक्त्या सोऽक्षयं नरकं व्रजेत् ॥ ५४ ॥ संगतं वापि यस्त्यक्त्वा बांधवं नृपसत्तम ॥ परपूजारतो मूढः सोऽक्षयं नरकं व्रजेत् ॥ ५५ ॥ छिद्रान्वेषी तु यो नित्यं परेषां मूढमानसः ॥ परेणोत्साहयोगेन सोऽक्षयं नरकं व्रजेत् ॥ ५६ ॥ देवनिंदापरश्चैव यतिनिंदापरस्तथा ॥ वेदनिंदापरश्चैव सोऽक्षयं नरक व्रजेत् ॥ ५७ ॥ विष्णुं ब्रह्मण्यदेवेशं पुराणं पुरुषोत्तमम् ॥ लोकनाथमनाथं तं जगतः कारणं परम् ॥ ५८ ॥ न चार्चयंति ये मूढाः परमात्मानमव्ययम् ॥ ते यांति नरकं घोरं परमं चाक्षयं नराः ॥ ५९ ॥ विद्यमाने तथा द्रव्ये दानधर्मविवर्जितः ॥ पुरुषो राजशार्दूल सोऽक्षयं नरकं व्रजेत् ॥ ६० ॥ विद्यमाने तथा द्रव्ये प्रतिग्रहरुचिर्द्विजः ॥ नरकं रौरवं प्राप्य तत्रैव परिपच्यते ॥ ६१ ॥ पिशुनो यस्तु विप्राणां रंध्रान्वेषणतत्परः ॥ तं दृष्ट्वा पुरुषव्याघ्र सचैलं स्नानमाचरेत् ॥६२॥ नीचाभिगमने सक्ता या नारी पुरुषर्षभ ॥ प्रतिकूला तथा भर्त्तुः साक्षयं नरकं व्रजेत् ॥ ६३ ॥ आहूता चैवं शयने स्त्रीसौभाग्येन गर्विता ॥ भर्तुः संकाशं नायाति साक्षयं नरकं व्रजेत् ॥ ६४ ॥ वंचयित्वा प्रियं पुत्रं रसनेंद्रियमोहिता ॥ मिष्टमश्नाति या वै साक्षयं च नरकं व्रजेत ॥६५॥ अतिथिं कालसंप्राप्तमभ्यागतमथापि वा ॥ अवमानपरा

यातु साक्षयं नरकं व्रजेत् ॥ ६६ ॥ एतत्ते सर्वमाख्यात मया तत्त्वेन भारत ॥ अक्षयो नरको येन प्राप्यते कर्मणा नरैः ॥ ६७ ॥ नहुष उवाच ॥ अक्षयं स्वर्गमाप्नोति कर्मणा येन मानवः ॥ सर्वज्ञं त्वामहं मन्ये तद्वदस्व ममानघ ॥ ६८ ॥ युधिष्ठिर उवाच ॥ यज्ञहोमजपस्नानदेवतार्चनतत्परः ॥ नित्यं धर्मरतश्चापि सोऽक्षयं स्वर्गमश्नते ॥६९॥ गृहे यस्यागतो विद्वान्ब्राह्मणो न च गच्छति ॥ निराशो नरशार्दूल सोऽक्षयं स्वर्गमश्नुते ॥७० ॥ दोषान्विहाय राजेंद्र गुणान्वेषणतत्परः ॥ परेषां सततं यश्च सोऽक्षयं स्वर्गमश्नते ॥ ७१ ॥ याचितो यः प्रहृष्येत्तु दत्त्वा च प्रियवाग्भवेत् ॥ स्वधर्मान्न प्रमाद्येद्यः स नरः स्वर्गमाप्नुयात् ॥ ७२ ॥ गच्छंस्तिष्ठन्स्वपञ्जाग्रद्धसञ्जल्पञ्छ्वसंस्तथा ॥ नरः परहितो यश्च सोऽक्षयं स्वर्गमश्नुते ॥७३॥ पतिव्रता च या नारी मनोवाक्कायकर्मभिः ॥ भर्तुः शुश्रूषणपरा साक्षयं स्वर्गमश्नते ॥ ७४ ॥ यौवने सति राजेंद्र रूपद्रव्ये तथैव च ॥ यो वै जितेंद्रियो धीरः सोऽक्षयं स्वर्गमश्नते ॥ ७५ ॥ शूद्रो द्विजातिवर्गस्य शुश्रूषानिरतश्च यः ॥ कर्मणा मनसा वाचा सोऽक्षयं स्वर्गमश्नुते ॥ ७६ ॥ एतत्ते कथितं सर्वं मया तत्त्वेन पार्थिव ॥ प्राप्यते कर्मणा येन स्वर्गवासोऽक्षयो नरैः॥७७॥ नहुष उवाच ॥ कथयस्व महाबाहो यः कालः श्राद्धदानयोः ॥ यत्नेन महताविश्य प्रश्नं कथय सुव्रत ॥ ७८ ॥ युधिष्ठिर उवाच ॥ यत्रैव ब्राह्मणं पश्येच्छ्रोत्रियं नियतेंद्रियम् ॥ रागद्वेषविनिर्मुक्तं वैष्णवं धर्मतत्परम् ॥ ७९ ॥ येन केनचिदाच्छिन्नं यत्र तत्र निवासिनम् ॥ एतं कालमहं मन्ये परमं श्राद्धदानयोः ॥ ८० ॥ नहुष उवाच ॥ जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च ॥ ब्राह्मण्यं केन भवति ब्रूह्येतत्सुविनिश्चितम् ॥ ८१ ॥ युधिष्ठिर उवाच ॥ न जातिर्न कुलं तात न स्वाध्यायो न च श्रुतम् ॥ कारणानि द्विजातेश्च वृत्तमेव तु कारणम् ॥ ८२ ॥ अनेके मुनयस्तात तिर्यग्योनिसमुद्भवाः ॥ स्वध-

र्माचारनिरता ब्रह्मलोकमितो गताः ॥ ८३ ॥ बहुना किमधीतेन नरस्यैव दुरात्मनः ॥ तेनाधीतं श्रुतं तेन यो वृत्तमुपतिष्ठति ॥ कपालस्थं यथा तोयं श्वदृष्टं च यथा पयः ॥ ८४ ॥ दुष्टं स्यात्स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ वृत्तं यत्नेन संरक्षन्वृत्तमेति च याति च ॥ अक्षीणो वृत्ततोऽक्षीणो वृत्ततस्तु हतो हतः ॥ ८५ ॥ किं कुलेनोपदिष्टेन विपुलेन दुरात्मनः ॥ कृमयः किं न जायंते कुसुमेषु सुगंधिषु ॥ ८६ ॥ तस्माज्जानीहि राजेंद्र वृत्तं ब्राह्मणलक्षणम् ॥ चतुर्वेदोऽपि दुर्वृत्तः शूद्रात्पापतरः स्मृतः ॥ ८७ ॥ योऽग्निहोत्ररतो दांतो संतोषनिरतः शुचिः ॥ तपःस्वाध्यायशीलश्च तं देवा ब्राह्मणं विदुः ॥ ८८ ॥ येन केनचिदापन्नं येन केनचिदाश्रितम् ॥ यत्र तत्र शयानं च तं देवा ब्राह्मणं विदुः ॥ ८९ ॥ यस्य नारायणे भक्तिर्यस्मिन्नेते च सद्गुणाः ॥ सुदुर्लभतरो लोके स पुमान्नात्र संशयः ॥ ९० ॥ सर्वद्वंद्वसहो धीरः सर्वसंगविवर्जितः ॥ सर्वभूतहिते युक्तस्तं देवा ब्राह्मणं विदुः ॥ ९१ ॥ योऽहेरिव गुणाद्भीतः सन्मानान्मरणादिव ॥ कुणपादिव यः स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥ ९२ ॥ सत्यं दमस्तपो दानमहिंसेंद्रियनिग्रहः ॥ दृश्यते यत्र राजेंद्र स ब्राह्मण इति स्मृतः ॥ ९३ ॥ शूद्रे चैवं भवेद्वृत्तं ब्राह्मणे न च विद्यते ॥ शूद्रोऽपि ब्राह्मणो ज्ञेयो ब्राह्मणः शूद्र एव च ॥ ९४ ॥ कामक्रोधानृतद्रोहलोभमोहमदादयः ॥ न संति यत्र राजेंद्र तं देवा ब्राह्मणं विदुः ॥ ९५ ॥ न जातिर्न कुलं पुंसो गुणाः कल्याणहेतवः ॥ वृत्तस्थोऽपि हि चांडालः सोऽपि सद्गतिमाप्नुयात् ॥ ९६ ॥ अदेवं दैवतं कुर्याद्देवं चैवाप्यदैवतम् ॥ कैवर्त्यजनयद्व्यासमृष्यशृंगो मृगीसुतः ॥ ९७ ॥ युधिष्ठिर उवाच ॥ आमिषी नरव्याघ्रश्च राक्षसेष्वपि पठ्यते ॥ स्वल्पमध्ययनं नाम वृत्तं ब्राह्मणलक्षणम् ॥ ९८ ॥ अग्निहोत्रं च वेदाश्च राक्षसानां गृहे गृहे ॥ दया शौचं च सत्यं च राक्षसेभ्यो निवर्तते ॥ ९९ ॥ नहुष उवाच ॥ प्रियवादी किं लभते विभृत्यकरः किं लभते ॥

बहुमित्रकरः किं लभते निजधर्मरतः किं लभते ॥ १०० ॥ युधिष्ठिर उवाच ॥ प्रियवचनवदः प्रियो भवति विभृत्यः कार्यकरोऽधिको जयति ॥ बहुमित्रकरः सुखं लभति निजधर्मकरः सुखं लभते ॥ १०१ ॥ नहुष उवाच ॥ उक्तास्ते सर्वतः प्रश्ना मम प्रश्नविदां वर ॥ इदानीमेव मुंचामि भ्रातरं ते वृकोदरम् ॥ १०२ ॥ नहुषेण ततो मुक्तं भीममाश्लिष्य सादरम् ॥ युधिष्ठिरोऽपि धर्मात्मा नहुषं प्रत्यबोधयत् ॥१०३॥ नहुषोऽपि मुनेः शापाद्विमुक्तः प्रीतमानसः ॥ दिव्यरूपधरः श्रीमान्प्रत्युवाच युधिष्ठिरम् ॥ १०४ ॥ नहुष उवाच ॥ भाषणं साधुभिः पुण्यमिति सत्यवती श्रुतिः ॥ सर्पत्वात्पश्य मुक्तोऽहं त्वया संभाष्य साधुना ॥ १०५ ॥ धर्मं किल नराः कृत्वा लभते सत्सुतानिह ॥ धर्मेण कः कृतो धर्मो येन लब्धो भवान्सुतः ॥ १०६ ॥ सा केवलं प्रजा धन्या यासां धर्मपरो भवान् ॥ धर्मो हि धन्यो धर्मज्ञो यस्य पुत्रस्त्वमीदृशः ॥ १०७ ॥ दृष्टाः श्रुताश्च बहवो नृपा धर्मपरायणाः ॥ न श्रुतो न च दृष्टो मे धर्मज्ञस्त्वादृशो नृपः ॥१०८॥ युधिष्ठिर उवाच ॥ संनम्योऽहं महाराज यस्य तुष्टो भवान्गुरुः ॥ महाभाग्यस्य तुष्यंति देवतुल्या भवादृशाः ॥ १०९ ॥ साधूनां तद्धि साधुत्वं तद्भूतगुणकीर्तनम् ॥ कीर्तयंत्यगुणानेव साधवस्तेऽप्यसाधवः ॥ ११० ॥ किं तु कौतूहलं किंचिन्मम पार्थिवसत्तम ॥ अतः पृच्छामि मोहात्त्वामहं नैवाभ्यसूयया ॥ १११ ॥ सर्वशास्त्रार्थतत्त्वज्ञं त्रैलोक्यैश्वर्यपूजितम् ॥ कथं त्वामाविशन्मोहः प्राकृतं पुरुषं यथा ॥ ११२ ॥ नहुष उवाच ॥ श्रुतशीलादिसंयुक्तं धार्मिकं तपसि स्थितम् ॥ सुप्राज्ञमपि कौंतेय हृद्विमोहयते नरम् ॥ ११३ ॥ हृदाभिजनवृत्तोऽपि न स राजास्ति कश्चन ॥ यस्य चेतसि राजेंद्र न करोति मदस्थितिः ॥ ११४ ॥ दुर्जयः सहजः शत्रुर्मदो राज्ञां सुदारुणः ॥ तेनाभिभूता दृश्यंते राज्यात्स्वर्गाच्च

---

१ राजेति शेषः ।

पातिताः ॥ ११५ ॥ राज्यस्था यदि राजानः स्वधर्मं कुर्युरादृताः ॥ ततः स्वर्गाच्च मोक्षाच्च नान्यां ते गतिमाप्नुयुः ॥११६॥ एकेनाह्ना नृपो धर्ममधर्मं वा करोति यम् ॥ बहुनापि न कालेन तं करोतीतरो जनः ॥११७॥ यथाग्नौ ध्रुवमुष्णत्वमनिले चलनं यथा ॥ यथा शशिनि शीतत्वं तथैश्वर्ये ध्रुवो मदः॥११८॥वारुणीपानमत्तस्तु क्वचित्किंचिद्विबुध्यते॥ ऐश्वर्य्यमदमत्तस्तु न तत्त्वं वेत्ति कर्हिचित् ॥ ११९ ॥ ऐश्वर्यतिमिरं चक्षुर्न हि पश्यति निर्मलम् ॥ पश्चाद्विमलतां याति विनिपातांजनाचितम् ॥ १२० ॥ ऐश्वर्यमोहतिमिरैर्मदांधीकृतलोचनः ॥ पतितः प्राक्स्वसंबंधैः सांप्रतं बोधितस्त्वया ॥१२१॥ लोकद्वयहितं वक्तुं ज्ञातुं को वा न पंडितः ॥ त्वत्क्रियानुविधानेन मुनयोऽपि न पंडिताः॥ १२२॥ पंडितोऽपि सुशूरोऽपि ससहायोऽपि पार्थिव ॥ मदेन ग्रस्यतेऽवश्यं राहुणेव दिवाकरः ॥ १२३ ॥ तस्माल्लोकद्वयध्वंसी न कार्यो भवता मदः ॥ प्रत्यक्षमपि दृश्येत यत्प्राप्तं सांप्रतं मया ॥ १२४ ॥ द्विजाश्च नावमंतव्यास्त्रैलोक्यैश्वर्य्यपूजिताः ॥ देववत्पूजनीयाश्च दानमानार्चनादिभिः ॥ १२५ ॥ यै कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः ॥ क्षयी चाप्यायनश्चंद्रः को नु पश्येत्प्रकोपितान् ॥ १२६ ॥ यस्यास्येन सदाश्नंति हव्यानि च दिवौकसः ॥ कव्यानि चैव पितरः किंभूतमधिकं ततः ॥१२७॥ ये पूजिताः सुरैः सर्वैर्विबुधैश्चैव पार्थिवैः ॥ तपोवृत्तधना ये च कस्ताञ्जगति नार्चयेत् ॥१२८॥ पूर्वं पीतः समुद्रो यैर्विंध्यो वृद्धो निवर्तितः ॥ इच्छया देवताः सृष्टाः कः स्यात्पूज्यतमस्ततः ॥ १२९ ॥ वाक्छस्त्रा वाग्विषा राजञ्जायन्ते कोपिता द्विजाः ॥ तोषितास्तीर्थभूताश्च सर्वपापप्रणाशनाः ॥१३०॥ तथा च देवदेवेन विष्णुना प्रभविष्णुना ॥ उक्तं यद्देवमध्ये तु द्वारकायां पुरानघ ॥ १३१ ॥ घ्नंतं शपंतं परुषं वदंतं प्रणमेत्सदा ॥ यो हि मां परया भक्त्या आराधयितुमिच्छति ॥ तेन पूज्याः सदा विप्रास्तेन तुष्टो भवाम्यहम् ॥ १३२ ॥ एवमुक्त्वा

च नहुषो धर्मराजं दिवं गतः ॥ धर्मराजोऽपि भीमेन सहितः स्वाश्रमं ययौ ॥१३३॥ तत्र गत्वा यथा वृत्तं वृत्तांतं नृपसत्तमः ॥ मुनीनां कथयामास यमयोरर्जुनस्य च ॥ १३४ ॥ वैशंपायन उवाच ॥ एतत्ते कथितं राजन्यथा भीमो महाबलः ॥ अरण्येऽजगरग्रस्तो धर्मराजेन मोचितः ॥१३५॥ एतान्धर्मान्विशेषेण श्रुत्वा वै पांडुनंदनात् ॥ नहुषः प्राप्तवान्सद्यो ब्रह्मलोकं सनातनम् ॥ १३६ ॥ य इदं शृणुयान्नित्यं नहुषाख्यानमुत्तमम् ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १३७ ॥

इति श्रीमदितिहाससमुच्चये युधिष्ठिरनहुषसंवादोपाख्यानं नामाष्टाविंशोऽध्यायः २८

# एकोनत्रिंशोऽध्यायः २९ ।

वैशंपायन उवाच ॥ शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् ॥ मूर्ध्ना प्रणम्य धर्मात्मा प्रपच्छेदं युधिष्ठिरः ॥ १ ॥ युधिष्ठिर उवाच ॥ भगवञ्छ्रोतुमिच्छामि सत्यवाक्यमनुत्तमम् ॥ यत्प्राग्बहुलया प्रोक्तं तन्मे व्याख्यातुमर्हसि ॥ २ ॥ भीष्म उवाच ॥ सौम्य धर्मं प्रवक्ष्यामि सत्यार्जवगुणान्वितम् ॥ कामरूपस्य व्याघ्रस्य धेन्वा संवादमुत्तमम् ॥ ॥ ३ ॥ माथुरे विषये रम्ये धनधान्यसमाकुले ॥ नानाजनपदाकीर्णे यज्ञोत्सवसमन्विते ॥ ४ ॥ तत्र सा नगरी रम्या यमुनातीरमाश्रिता ॥ अर्धचंद्रप्रतीकाशा विद्वज्जननिषेविता ॥ ५ ॥ इंद्रयष्टिध्वजाकीर्णा गोपुरैरभिशोभिता ॥ बहुद्विजसमाकीर्णा बहुभांडसुविक्रिया ॥ ६ ॥ सुप्रमाणा च रम्या च स्वातिनक्षत्रनिर्मिता ॥ प्राकाराट्टालवेदीभिर्दुर्ज्जया परिखादिभिः ॥ ७ ॥ देवतायतनैर्दिव्यैः कदलीखंडमंडितैः ॥ राजहंसप्रतीकाशैर्दीप्यते धवलैर्गृहैः ॥ ८ ॥ पनसैर्बकुलैस्तालैः प्रिया-

१ कर्मणः शेषत्वविवक्षया षष्ठी ।

लैर्नारिकेलकैः ॥ आम्रातकैः कपित्थैश्च राजवृक्षैश्च शोभिता ॥ ९ ॥ संपूर्णा धनधान्यैश्च गोधनैर्व्याकुलीकृता ॥ वेदाध्ययननिर्घोषैः पवित्रीकृतमंडपा ॥ १० ॥ वेदीशृंगाटकै रम्यैश्चित्रचत्वरशोभिता ॥ रावणस्येव रम्या सा लंका नाम महापुरी ॥ ११ ॥ इंद्रसेनो यत्र नृपो मुनिवृत्तसमन्वितः ॥ धर्मे ह्यभिरतो नित्यं देवतातिथिपूजकः ॥ १२॥ क्षत्रधर्मरतः श्रीमानुमापतिसमो गुणैः ॥ तेन सा नगरी रम्या राजसिंहेन पालिता ॥ १३ ॥ नित्योत्सवैश्च मुदिता वंशवादित्रनादिता ॥ सुसंगीतविदग्धैश्च प्रोक्षणीयसमाकुला ॥१४॥ अंतरापणवीथीभिः सुविभक्तचतुष्पथा ॥ दीर्घिकाकूपवापीभिस्तडागैश्चोपशोभिता ॥१५॥ सभा यत्र समाकीर्णा विवाहोत्सवसंकुला ॥ सुवेषैश्च सुरूपैश्च नरनारीगणैर्वृता ॥ १६ ॥ पुरी चंद्रावती नाम दृष्टा वा यदि वा श्रुता ॥ तस्यां पुर्य्यां यथावृत्तं तच्छृणुष्व युधिष्ठिर ॥ १७ ॥ कस्यचिद्द्विजमुख्यस्य कल्याणी धेनुरुत्तमा ॥ हृष्टपुत्रा सुसंतुष्टा बहुला नाम नामतः ॥१८॥ गोमंडलस्य मुख्या सा हंसवर्णा घटस्तनी ॥ दीर्घघोणा विभक्तांगी बंधुरांगी तनुत्वचा ॥ १९ ॥ विस्तीर्णजघना दिव्या पीनोन्नतपयोधरा ॥ सर्वलक्षणसंपूर्णा सर्वावयवसुंदरी ॥ २० ॥ नीलकंठी शुभग्रीवा घंटालीमधुरस्वरा ॥ सा च यूथस्य सर्वस्य चचाराग्रे सुनिर्भया ॥ २१ ॥ यदृध्वानं चिरोच्छिन्नं सा गत्वैव यथासुखम् ॥ आर्द्रं प्रकामं सुरभिरच्छिन्नं चरते तृणम् ॥ २२ ॥ रोहितो नाम तत्रासीत्पर्वतो यमुनातटे ॥ अनेककंदरगुहो नानानिर्झरशोभितः ॥ २३ ॥ तस्य पूर्वोत्तरे भागे घोरे तृणसमाकुले ॥ संकटे विषमे घोरे भैरवे लोमहर्षणे ॥ २४ ॥ मृगसिंहसमाकीर्णे बहुश्वापदसेविते ॥ वल्लीवृक्षादिगहने शिवात्यंतनिनादिते ॥ २५ ॥ दुर्गेऽस्मिन्वसते तत्र कामरूपीति नामतः ॥ व्याघ्रो रौद्रः शोणिताशी महादंष्ट्रो महाबलः ॥ २६ ॥ महापर्वतसंकाशो मेघगर्जितनिःस्वनः ॥ महो-

दरो गुहापूर्णस्तीक्ष्णदंष्ट्रो नखायुधः ॥ २७ ॥ शर्मिलो नाम धर्मात्मा स गोपो गोहिते रतः ॥ अच्छिन्नाग्रैस्तृणैर्दीर्घैर्गोधनं परिरक्षते ॥२८॥ तस्य यूथात्परिभ्रष्टा बहुला तृणतृष्णया ॥ व्याघ्रस्य पुरतः सा गौश्चरंती समुपस्थिता ॥ २९ ॥ अभिद्रवंश्च तां व्याघ्रस्तिष्ठ तिष्ठेति च ब्रुवन् ॥ धेनो त्वमद्य विहिता भक्ष्यं प्राप्तासि मे ध्रुवम् ॥३०॥ त्वामद्य भक्षयिष्यामि दुर्लभं तव जीवितम् ॥ नियतोऽहं क्षुधार्तश्च कष्टकालेऽतिदुःखितः ॥३१॥ अद्य तृप्तिं गमिष्यामि तव मांसेन कामतः ॥ तिष्ठ तिष्ठ भयं त्यक्त्वा भीता वा किं करिष्यसि ॥ ३२ ॥ भीष्म उवाच ॥ व्याघ्रस्य वचनं श्रुत्वा निष्ठुरं रोमहर्षणम् ॥ तदा सा कंपिता धेनुर्वांशुना कदली यथा ॥ ३३ ॥ सुस्वरूपान्वितं बालं चंद्रबिंबसमप्रभम् ॥ वत्सं स्मरति सा धेनुः स्नेहार्ता भृशदुःखिता ॥ ३४ ॥ दहंती पुत्रशोकेन बहुला पुत्रवत्सला ॥ रुदंती करुणं दीना निराशा पुत्रदर्शने ॥ ३५ ॥ दृष्ट्वा तु बहुलां व्याघ्रः क्रंदमानां सुदुःखिताम् ॥ उवाच वचनं घोरं बहुले किं प्ररोदिषि ॥ ३६ ॥ दैवाद्दैवोऽपि यन्नास्ति भक्ष्या त्वं मे यदृच्छया ॥ न रुदंत्या हसंत्या वा तवाद्य जीवितं भवेत् ॥ ३७ ॥ विहितं भुज्यते लोके स्वयं प्राप्तासि तत्तथा ॥ मृत्युस्ते विहितो घोरे वृथा किमनुशोचसि ॥ ३८ ॥ पप्रच्छ च पुनर्व्याघ्रः किमर्थं रुदितं त्वया ॥ कौतूहलं च संजातमशेषं कथयस्व मे ॥ व्याघ्रस्य वचनं श्रुत्वा बहुला वाक्यमब्रवीत् ॥ ३९ ॥ बहुलोवाच ॥ क्षंतुमर्हसि मे नाथ कामरूप नमोऽस्तु ते ॥ त्वां समासाद्य लोकस्य परित्राणं न विद्यते ॥ ४० ॥ जीवितार्थं न शोचामि संप्राप्तं मरणं मया ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ ४१ ॥ तस्मादपरिहार्येऽर्थे न शोचामि मृगाधिप ॥ दैवैरपि यदा सर्वैर्मर्त्तव्यमवशं ध्रुवम् ॥ ४२ ॥ तस्मान्न चाहमेवैका व्याघ्र शोचामि जीवितुम् ॥ किं तु स्नेहवशाद्व्याघ्र सुदुःखं रुदितं मया ॥ ४३ ॥ अस्ति

मे हृदि संतापस्तं च त्वं श्रोतुमर्हसि ॥ अग्रे वयसि वर्त्तंती प्रसूताहं मृगाधिप ॥ दृष्टप्रथमबाला वै सुतश्च मम बालकः ॥ ४४ ॥ क्षीरपः स च मे वत्सस्तृणं नाद्यापि जिघ्रति ॥ स च मे गोव्रजे बद्धः क्षुधार्तो मामवेक्षते ॥ ४५ ॥ भृशं तमनुशोचामि कथं जिविष्यते सुतः ॥ तस्येच्छामि स्तनं दातुं पुत्रस्नेहवशं गता ॥ ४६ ॥ पाययित्वा च तं वत्समवलिह्य च मूर्द्धनि ॥ सखीनामर्पयित्वा तु संदिश्य च हितं वचः ॥ ४७ ॥ पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि ॥ अहमद्य गमिष्यामि महाव्याघ्र तवांतिकात् ॥ बहुलाया वचः श्रुत्वा मृगेंद्रः पुनरब्रवीत् ॥ ४८ ॥ व्याघ्र उवाच ॥ किं ते पुत्रेण कर्तव्यं मरणं किं न बुध्यसे ॥ त्रस्यंति सर्वभूतानि म्रियन्ते मां निरीक्ष्य च ॥ ४९ ॥ त्वं पुनः कृपयाविष्टा पुत्रपुत्रेति भाषसे ॥ न मंत्रो न तपो दानं न माता न पिता सुतः ॥ शक्नुवंति परित्रातुमागतं मत्समीपतः ॥ ५० ॥ कथं त्वं गोकुलं गत्वा गोपीजनसमाकुलम् ॥ वृषभैर्नादितं रम्यं चलद्वत्ससमाकुलम् ॥ भूषणं मर्त्यलोकस्य स्वर्गलोको न संशयः ॥ ५१ ॥ नित्यं प्रमुदितं रम्यं सर्वदैवतपूजितम् ॥ यत्पवित्रं पवित्राणां मंगलानां च मंगलम् ॥ ५२ ॥ यत्तीर्थं सर्वतीर्थानां रम्याणां रम्यमुत्तमम् ॥ समस्तरससंपूर्णमीश्वरायतनं परम् ॥ यत्प्राप्यं सर्वसिद्धानां भौमं स्वर्गमनुत्तमम् ॥ ५३ ॥ गोपीमंडनशब्देन यत्र लक्ष्मीर्विराजते ॥ यत्र वत्साश्च हुंकारान्कुर्वंते मातृकांक्षया ॥ स्रवंति मातरश्चापि स्नेहार्द्राः पुत्रकांक्षया ॥ ५४ ॥ यद्गोपैः पालितं शूरैर्बहुयुद्धपरिश्रितैः ॥ प्रगीतनृत्यसंलापक्ष्वेलनास्फोटनादिभिः ॥ ५५ ॥ इतस्ततः सृतैर्वत्सैः कूर्दमानैः समंततः ॥ सरोवद्राजते गोष्ठं चलद्भिरिव पंकजैः ॥ ५६ ॥ गत्वा निकेतनं रम्यं मातरं भ्रातरं सुतम् ॥ दृष्ट्वा सखीजनं भूयः कथं प्रत्यागमिष्यसि ॥ ५७ ॥ पंचभूतानि मे भद्रे पिबंतु रुधिरं तव ॥ न निराश्यानि भूतानि वाङ्मात्रेण करो-

म्यहम् ॥ ५८ ॥ बहुलोवाच ॥ प्रथमं दृष्टवत्साहं मृगेंद्र शृणु मे वचः ॥ दृष्ट्वा सखीजनं बालं गोपांश्च परिचारकान् ॥ ५९ ॥ गोपीजनमुपामंत्र्य जननीं च विशेषतः ॥ शपथैरागमिष्यामि मन्यसे यदि मुंच माम् ॥ ६० ॥ यत्पापं ब्रह्महत्त्यायां पितृमातृवधे तथा ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६१ ॥ द्विभार्यः पुरुषो यस्तु द्वेषादेकां विवर्ज्जयेत् ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः॥६२॥ गोषु विघ्नं च ये कुर्युः शपंते ताडयंति च ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६३ ॥ कथायां कथ्यमानायामंतरायं करोति यः ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६४ ॥ यः प्रक्षीणबलीवर्द्दान्विषमे वाहयेन्नरः ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६५ ॥ यतिनिंदापरो नित्यं वेदनिंदापरस्तथा ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६६ ॥ गृहे यस्य गतो विप्रो निराशः प्रतिगच्छति ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६७ ॥ सूतकेषु च यत्पापं परद्रव्यापहारके ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६८ ॥ एकाकी मिष्टमिश्नाति यः कश्चित्पुरुषाधमः ॥ तेन पापेन लिम्पामि यद्यहं नागमे पुनः ॥ ६९ ॥ इत्येतत्पातकैर्घोरैः कुर्वती शपथान्सती ॥ बुद्ध्या संप्रत्ययं व्याघ्रः पुनर्वचनमब्रवीत् ॥ ७० ॥ व्याघ्र उवाच ॥ संजातः प्रत्ययोऽस्माकं शपथैर्बहुले त्वयि ॥ कदाचिन्मन्यसे गत्वा मूर्खोऽयं वंचितो मया ॥ ७१ ॥ अत्रापि केचिद्वक्ष्यंति शयथैर्नास्ति पातकम् ॥ प्राणत्यागे समुत्पन्ने श्रद्धातव्यं न तत्त्वयि ॥ ७२ ॥ लोकेऽस्मिन्नास्तिकाः केचिन्मूर्खाः पंडितमानिनः ॥ भ्रमयंति च ते बुद्धिं चक्रारूढामिव क्षितिम् ॥ ७३ ॥ हेतुपक्षैश्च दृष्टांतैरज्ञानावृतचक्षुषः ॥ भ्रमयंति नराः क्षुद्राः कुत्सितागमदर्शनाः ॥ ७४ ॥ अतथ्यान्यपि तथ्यानि

---

१ नागच्छेयमित्यर्थः। एवमन्यात्रापि बोध्यम्।

दर्शयित्वातिपेशलाः॥ समनिम्नोन्नतानीचचित्रकर्मविदो जनाः॥७५॥ प्रायः कृतार्थो लोकोऽयं मन्यते नोपकारिणम्॥ वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम्॥ ७६॥ न तं पश्यामि लोकेऽस्मिन्कृते प्रतिकरोति यः॥ सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते॥ ७७॥ ऋषिदेवासुरनरैः शपथाः कार्यसिद्धये॥ कृताः परस्परं पूर्वं तान्न मन्यामहे वयम्॥ ७८॥ सत्येनापि शपेद्यस्तु देवाग्निसुरसंन्निधौ॥ तस्य वैवस्वती राजा धर्मस्यार्द्धं निकृंतति॥ ७९॥ मा ते बुद्धिर्भवेदेवं शपथैरेव वंचितः॥ संजातः प्रत्ययोऽस्माकं यथेष्टं कुरु सांप्रतम्॥ ८०॥ बहुलोवाच॥ एवमेतत्त्वयां व्याघ्र कस्त्वां वंचयितुं क्षमः॥ आत्मैव वंचितस्तेन यः परं वंचयिष्यति॥ ८१॥ अपवादो भवेद्येन येन चाप्रत्ययो भवेत्॥ निरयो गम्यते येन तत्कर्म न समाचरेत्॥ ८२॥ व्याघ्र उवाच॥ बहुले पश्य गच्छ त्वं पुत्रकं पुत्रवत्सले॥ पाययित्वा दृढं वत्समवलिह्य च मूर्द्धनि॥ ८३॥ भ्रातरं मातरं दृष्ट्वा स्वसृस्वजनमेव च॥ सत्यमेवाग्रतः कृत्वा शीघ्रमागमनं कुरु॥ ८४॥ भीष्म उवाच॥ एवं सा प्रत्ययं कृत्वा बहुला सत्यवादिनी॥ अनुज्ञाता मृगेंद्रेण प्रयाता पुत्रवत्सला॥ ८५॥ अश्रुपूर्णमुखी दीना वेपमाना सुदुःखिता॥ करुणं निःश्वसंती च पतिता शोकसागरे॥८६॥ करिणी पंकलग्नेव विजने वनगोचरे॥ अशक्तात्मपरित्राणे विलपंती मुहुर्मुहुः॥ ८७॥ अथ सा गोकुलं गत्वा बहुला कृतनिश्चया॥ दृष्ट्वा तु पुत्रकं क्रोशं त्वरिता प्रययौ मुदा॥ ८८॥ उपासर्पच्च तां वत्सो बाष्पव्याकुललोचनाम्॥ संप्राप्य मातरं वत्सः पप्रच्छ परिशंकितः॥ ८९॥ वत्स उवाच॥ न ते पश्यामि सौम्यं वै दुर्मुखेवाद्य लक्ष्यसे॥ उद्विग्नेवाद्य ते दृष्टिर्भीता त्वमुपलक्ष्यसे॥ ९०॥ बहुलोवाच॥ पिब पुत्र पयो मेऽद्य कारणं यदि

१ प्रोक्तमिति शेषः।

पृच्छसि ॥ आगताहं तव स्नेहात्कुरु तृप्तिं यथेप्सिताम् ॥ ९१ ॥ अतः परमिदं पुत्र दुर्लभं मम दर्शनम् ॥ पयः पिब यथेष्टं मे प्रत्यूषे कस्य पास्यसि ॥ ९२ ॥ मया हि पुत्र गंतव्यं शपथैरागता ह्यहम् ॥ कामरूपस्य व्याघ्रस्य दातव्यं त्वात्मजीवितम् ॥ ९३ ॥ बहुलाया वचः श्रुत्वा वत्सो वचनमब्रवीत् ॥ अहं तत्र गमिष्यामि यत्र त्वं गंतुमिच्छसि ॥ ९४ ॥ श्लाघ्यं ममापि मरणं त्वया सह न संशयः ॥ एकाकिनापि गंतव्यं मया सद्यस्त्वया विना ॥ ९५ ॥ यदि मां सहितं मात्रा वने व्याघ्रो वधिष्यति ॥ या गतिर्मातृभक्तानां ध्रुवं सा मे भविष्यति ॥ ९६ ॥ तस्मादवश्यं यास्यामि त्वया सह न संशयः ॥ अथ वा तिष्ठ मातस्त्वं शपथाः संतु ते मया ॥ ९७ ॥ जनन्या विप्रयुक्तस्य जीवने किं प्रयोजनम् ॥ अनाथस्य वने नित्यं को मे नाथो भविष्यति ॥ नास्ति मातृसमो बंधुर्बालानां क्षीरपायिनाम् ॥ ९८ ॥ नास्ति मातृसमो नाथो विषमे पर्यवस्थिते ॥ नास्ति मातृसमः स्नेही केवलस्यापि संमतः ॥ नास्ति मातृसमो देव इह लोके परत्र च ॥ ९९ ॥ शतं पितॄणां हित्वापि मात्रा जीवंति जंतवः ॥ एष नः परमो धर्मः प्रजापतिविनिर्मितः ॥ सह गच्छंति ये मात्रा ते यांति परमां गतिम् ॥ १०० ॥ मासान्दशोदरस्थं या धृत्वा शूलैः समाकुलम् ॥ वेदनाविहितैर्दुःखैः प्रसूयेत विमूर्च्छिता ॥ १०१ ॥ स्तन्यं चामृततुल्यं पाययते पुत्रवत्सला ॥ मलमूत्रमये पंके मानात्स्नेहाद्विवर्द्धते ॥ १०२ ॥ प्राणैरपि प्रियान्पुत्रान्मनुते पुत्रवत्सला ॥ कस्तस्या निष्कृतिं कर्तुं शक्तो वर्षशतैरपि ॥ १०३ ॥ बहुलोवाच ॥ ममैव विहितो मृत्युर्न त्वमागंतुमर्हसि ॥ नैवायमन्यजीवानां मृत्युः स्यादन्यमृत्युना ॥ १०४ ॥ अपश्चिममिमं पुत्र मातृसंदेशमुत्तमम् ॥ अनुतिष्ठस्व मद्वाक्यं ननु शुश्रूषणं परम् ॥ १०५ ॥ जले स्थले च विचरन्प्रमादं मा करिष्यसि ॥ प्रमादात्सर्वभूतानि विनश्यंति न संशयः ॥ १०६ ॥ चरि-

तव्यं न लोभेन विषमस्थं तृणं क्वचित् ॥ लोभाद्विनाशः सर्वेषामिह लोके परत्र च ॥ १०७ ॥ समुद्रमटवीं दुर्गं विशंते लोभमोहिताः ॥ लोभादकार्यमत्युग्रं विद्वानपि समाचरेत् ॥ १०८ ॥ लोभात्प्रमादाद्विश्रंभात्त्रिभिः क्षयति वै जगत् ॥ तस्माल्लोभं न कुर्वीत न प्रमादं न विश्वसेत् ॥ १०९ ॥ तस्मात्सर्वादरेणात्मा रक्षितव्यः प्रयत्नतः ॥ सर्पेभ्यः श्वापदेभ्यश्च म्लेच्छचौरादिसंकटात् ॥ ११० ॥ तिरश्चां पापजीवानामेकत्र वसतामपि ॥ विपरीतानि चित्तानि विज्ञायंते न पुत्रक ॥ १११ ॥ नदीनां नखिनां चैव शृंगिणां शस्त्रपाणिनाम् ॥ विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥११२॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ॥ विश्वासाद्भयमुत्पन्नं मूलान्यपि च कृंतति ॥ ११३ ॥ न विश्वसेत्स्वदेहेऽपि चपलत्वाद्विशेषतः ॥ तद्वद्विमूढमत्यर्थं सुप्रमत्तः प्रमादतः ॥ ११४ ॥ ज्ञातुं गंधेन सततमाघ्रातव्यं प्रयत्नतः ॥ गावो गंधेन पश्यंति राजानश्चारचक्षुषा ॥ शास्त्रेण पंडिताः सर्वे ज्ञानेनैव तु योगिनः ॥ ११५ ॥ नैव तिष्ठेद्वने घोरे धर्ममेव विचिंतयेत् ॥ न चोद्वेगस्त्वया कार्यः सर्वस्य मरणं ध्रुवम् ॥ ११६ ॥ यत्रानित्यं जगत्सर्वं तत्रैवं शोचसे कथम् ॥ वत्स त्वं शोकमुत्सृज्य मद्वाक्यमनुपालय ॥ ११७ ॥ ज्ञानवृद्धास्तपोवृद्धास्तथैवैश्वर्यमानिनः ॥ न तेषामहितं कार्यं मनोवाक्कायकर्मजम् ॥ ११८ ॥ एवमादिश्य तं वत्सं समालिंग्य पुनः पुनः ॥ शोकेन तु समाविष्टा बाष्पव्याकुललोचना ॥ ११९ ॥ विनिश्वसंती दुःखार्ता दीर्घमुष्णं मुहुर्मुहुः ॥ पुत्रहीनेव पश्यंती जगदंधा तथाभवत् ॥ १२० ॥ महापापनिमग्नेव तिष्ठत्येवावसीदति ॥ अपुत्रस्य गृहं शून्यं जगच्छून्यं तथैव च ॥ पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी ॥ १२१ ॥ नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ॥ नास्ति पुत्रसमो धर्मो नास्ति पुत्रसमा गतिः ॥१२२॥ लोकोऽनृतं तद्वदति चंदनं यत्सुशीतलम् ॥ पुत्रगात्रपरिष्वंग-

श्चंदनादपि शीतलः ॥ १२३ ॥ इति पुत्रगुणानुक्त्वा तं निरीक्ष्य मुहुर्मुहुः ॥ स्वमातरं सखीर्गोपान्क्रंदमानानुगच्छति ॥ १२४ ॥ बहुलोवाच ॥ यूथभ्रष्टां वनांते मामाससाद मृगाधिपः ॥ मुक्ताहं तेन शपथैः कुलं दृष्ट्वागमिष्यसि ॥ १२५ ॥ साहं भगवतीं द्रष्टुं मातरं स्वकुलं सुतम् ॥ आगता सत्यवाक्येन पुनर्यास्यामि तत्र तु ॥ १२६ ॥ मातः क्षमस्व तत्सर्वं बालिशाद्यत्कृतं मया ॥ न्यासस्तवायं दौहित्रः किमत्रान्यद्ब्रवीम्यहम् ॥ १२७ ॥ विपुले चंपकोद्दामे भद्रे सुरभिमालिनि ॥ वसुधाराश्रये नंदे वसुधारे घटस्रवे ॥ १२८ ॥ अज्ञानाज्जानतो वापि यदुक्तं किंचिदप्रियम् ॥ तत्क्षमध्वं महाभागे यच्चाप्यपकृतं मया ॥ १२९ ॥ सर्वाः सर्वगुणोपेताः सर्वा लोकस्य मातरः ॥ सर्वाः सर्वप्रदा नित्यं क्षमध्वं मम बालकम् ॥ १३० ॥ अनाथमबलं दीनं कृपणं मम पुत्रकम् ॥ मातृशोकाभिसंतप्तं भगिन्यः पालयिष्यथ ॥ १३१ ॥ भगिनीनामयं पुत्रः सांप्रतं च विशेषतः ॥ बालो बलेभ्यः सर्वाभिः पोष्यः पाल्यश्च सर्वदा ॥ १३२ ॥ चरंतं विषमस्थाने गच्छंतं परगोकुले ॥ वर्तमानमकार्येषु वारयध्वं सुतं मम ॥ १३३ ॥ परपुत्रात्मपुत्रेषु यासां चित्तं स्थिरं भवेत् ॥ ता धन्यास्ताः कृतार्थाश्च ताः स्त्रियो लोकमातरः ॥ १३४ ॥ मोदंते देवलोकेषु ताः सुपुण्यकृतां वराः ॥ याः पालयंत्यनाथांश्च परपुत्रान्स्वपुत्रवत् ॥ १३५ ॥ तस्मादनाथं पुत्रं मे पुत्रवत्पालयिष्यथ ॥ क्षमध्वं च महाभागा यास्यामि वनगोचरम् ॥ १३६ ॥ न चास्मद्वचनात्कार्यः सख्यो मन्युः कथंचन ॥ यतः सर्वस्य जातस्य स्थितं मरणमग्रतः ॥ १३७ ॥ श्रुत्वैतद्बहुलावाक्यं माता सख्यश्च विह्वलाः ॥

---

१ लिङो लोटो वा विषये लट्, आगच्छेत्यर्थः । यद्वा व्याघ्रवचनमेतत्, अस्मिन्पक्षेऽयमर्थः । हे बहुले त्वच्छपथैरस्मास्वयं विश्वासो जातस्त्वं स्वीयकुलं दृष्ट्वा यत्समीपमागमिष्यसीति विश्वस्य तेन व्याघ्रेण मुक्तास्मीति बहुला जनन्यादीन्बोधयति । २ सखीराह । ३ हे सख्य इत्यर्थः । अत्र भगिनीशब्दः सखीपर्यायः । यद्वा स्वमातरं सखीरित्यादि पूर्वोक्तश्लोकघटकसखीशब्द एव भगिनीपर्यायः ।

विषादं परमं जग्मुरिदमूचुश्च विस्मिताः ॥ १३८ ॥ अहो सुमहदाश्चर्यं यद्व्याघ्रवचनं महत् ॥ प्रवेष्टुमुद्यता भीमं बहुला सत्यवाक्यतः॥१३९॥ शपथैः सत्यवाक्येन वंचयित्वा ततो भयम् ॥ नाशितव्यं प्रयत्नेन तत्कथं गम्यते पुनः ॥ १४० ॥ बहुले नोपगंतव्यं धर्मोऽयं कतमस्तव ॥ यद्बालं स्वसुतं त्यक्त्वा सत्यलोभेन गम्यते ॥ १४१ ॥ अत्र गाथा पुरा गीता ऋषिभिः सत्यवादिभिः ॥ प्राणत्यागे समुत्पन्ने शपथैर्नास्ति पातकम् ॥ १४२ ॥ असत्यवचनं सत्यं नासत्यवचनं भवेत् ॥ यद्भूतहितमत्यंतं तत्सत्यमितरं वृथा ॥ १४३ ॥ उक्तेऽनृते भवेद्यत्र प्राणिनां प्राणरक्षणम् ॥ अनृतं तत्र सत्यं स्यात्सत्यमत्यनृतं भवेत् ॥ १४४ ॥ यद्भूतेषु हितं सत्यं तत्सत्यमितरं मृषा ॥ १४५ ॥ कामिनीषु विवाहेषु गवां संरक्षणेषु च ॥ ब्राह्मणानां विपत्तौ च शपथैर्नास्ति पातकम् ॥ १४६ ॥ सर्वस्वहरणे चैव जीवस्य प्राणसंशये ॥ गोद्विजार्थे विवाहे च नानृतं स्याज्जुगुप्सितम् ॥ १४७ ॥ बहुलोवाच ॥ परेषां प्राणरक्षार्थं ब्रवीम्येवानृतं वचः ॥ नात्मार्थमुत्सहे वक्तुं स्वल्पमप्यनृतं क्वचित् ॥ १४८ ॥ एकः प्रसूयते जंतुरेक एव प्रलीयते ॥ एको नु भुंक्ते सुकृतमेकश्चाप्नोति दुष्कृतम् ॥१४९॥ वदंति मुनयः सर्वे नानृतात्पातकं परम् ॥ ततः पापतरं नास्ति तस्मात्सत्यं वदाम्यहम् ॥ १५० ॥ सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः ॥ उदधिः सत्यवाक्येन मर्यादां न विलंघते ॥ १५१ ॥ विदित्वा विष्णुमायांतं स्वराज्यहरणोद्यतम् ॥ दत्तवान्वंचितस्तेन बलिः सत्यप्रतिज्ञया ॥ १५२ ॥ अवाप तत्प्रसादेन पातालैश्वर्यमुत्तमम् ॥ अनेकजन्मसंसिद्धैस्तपोभिश्च दुरासदम् ॥ १५३ ॥ प्रवर्द्धमानः शैलेंद्रः शतशृंगसमुच्छ्रितः ॥ सत्येन संस्थितो विंध्यो वर्द्धन्नपि न वर्द्धते ॥ १५४ ॥ स्वर्गापवर्गनरकाः सर्वे वाचि प्रतिष्ठिताः ॥ यस्तां लोपयते वाचमशेषं तेन लोपितम् ॥१५५॥ योऽन्यथा संतमात्मानमन्यथा यस्तु भाषते ॥

किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ १५६ ॥ तस्मान्नैवाहमात्मानमात्मना च विलोपये ॥ यास्यामि निरयं घोरं विलोप्यात्मानमात्मना ॥ १५७॥ अगाधे विमले शुभ्रे सत्यतीर्थे क्षमाह्रदे ॥ स्नात्वा पापमलैर्मुक्ता यास्यामि परमां गतिम् ॥ १५८ ॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ॥ अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ १५९ ॥ सत्यं साधु तपः श्रुतं च परमं क्लेशादिभिर्वर्जितम् । स्वाधीनं च सुदुर्लभं च जगतः साधारणं भूषणम् ॥ साधूनां निकषः सतां कुलधनं सर्वाश्रमाणां बलम् । यन्मोक्षोऽप्यभिधाय गच्छति दिवं संत्यज्यते तत्कथम् ॥ १६० ॥ सख्य ऊचुः ॥ बहुले त्वं नमस्कार्या सर्वैरपि सुरासुरैः ॥ या त्वं परमसत्येन प्राणांस्त्यक्ष्यसि दुस्त्यजान् ॥ १६१ ॥ ब्रूमः किमत्र कल्याणि सा त्वं धर्मधुरंधरा ॥ त्यागेनानेन नाप्राप्यं त्रैलोक्ये किंचिदस्ति ते ॥ १६२ ॥ पुनर्योगं च पश्यामस्त्यागादस्मात्सुते च ते ॥ न हि कल्याणचित्तानामापदः संति कुत्रचित् ॥ १६३ ॥ एवमुक्ता सखीभिस्तु धर्माधिष्ठितमानसा ॥ बहुला विरहोद्विग्ना पुत्रशोकपरिप्लुता ॥ १६४ ॥ दृष्ट्वा गोपीकुलं सर्वं परिक्रम्य च गोकुलम् ॥ बहुला प्रस्थिता शोकाद्गोपान्वृद्धांश्च पृच्छती ॥ १६५ ॥ क्षितिं वरुणमर्कं च वायुमग्निं निशाकरम् ॥ दशदिग्देवताश्चापि नक्षत्राणि ग्रहैः सह ॥ १६६ ॥ सर्वान्विज्ञापयाम्यद्य प्रणिपत्य मुहुर्मुहुः ॥ स्वैः स्वैः प्रभावै रक्षध्वमनाथं मम बालकम् ॥ १६७ ॥ करुणाहतचित्तानां न स्यात्परजनो जनः ॥ तस्मात्करुणया बालमनाथं पालयिष्यथ ॥ १६८ ॥ ये संसृता वने सिद्धाः सर्वाश्च वनदेवताः ॥ वने चरंतं तं बालं रक्षंतु सततं मम ॥ १६९ ॥ चंपकाशोकपुन्नागसरलार्जुनकिंशुकाः ॥ शृण्वंतु पादपाः सर्वे संदेशं मम विप्लुतम् ॥ १७० ॥ बालमेकाकिनं दीनं चरंतं विषमे वने ॥ रक्षध्वं पुत्रकं मे हि स्नेहात्पुत्रमिवौरसम् ॥ १७१ ॥ मात्रा पित्रा विनिर्मुक्तमनाथं दीनमानसम् ॥ विचरं-

तामिमां भूमिं क्रंदमानं सुदुःखितम् ॥ १७२ ॥ तस्येह क्रंदमानस्य मम पुत्रस्य सर्वदा ॥ मातृशोकाभिभूतस्य क्षुत्पिपासातुरस्य च ॥ १७३ ॥ शून्यस्यैकाकिनः शून्यं जगत्सर्वं प्रपश्यतः ॥ चरमाणस्य कर्त्तव्यं सानुक्रोशस्य रक्षणम् ॥ १७४ ॥ भीष्म उवाच ॥ एवं संदिश्य बहुला पुत्रशोकवशं गता ॥ शोकाग्निनाभिसंतप्ता छिन्नाशा पुत्रदर्शने ॥ १७५ ॥ वियुक्ता चक्रवाकीव लतेव पतिता तरोः ॥ अंधेव दृष्टिरहिता प्रस्खलंती पदे पदे ॥ १७६ ॥ गता हि सा पुनस्तत्र यत्रासौ पिशिताशनः ॥ आस्ते विस्फूर्जितमुखस्तीक्ष्णदंष्ट्रो भयापहः ॥ व्याघ्रं दृष्ट्वा तु सा धेनुरिदं वचनमब्रवीत् ॥ १७७ ॥ बहुलोवाच ॥ आगताहं महाभाग सत्यधर्मव्यवस्थया ॥ कुरु तृप्तिं यथान्यायं मम मांसेन सांप्रतम् ॥ त्वं तर्पयस्व भूतानि यथेष्टं शोणितेन मे ॥ १७८ ॥ व्याघ्र उवाच ॥ स्वागतं तव कल्याणि बहुले सत्यवादिनि ॥ न हि सत्यवतां किंचिदशुभं विद्यते क्वचित् ॥ १७९ ॥ त्वयोक्तं बहुले पूर्वं सत्यात्प्रत्यागमे पुनः ॥ तेन मे कौतुकं जातं प्राप्ता प्रत्यागमे कथम् ॥ १८० ॥ ततः सत्यपरीक्षार्थं प्रेषितासि मया पुनः ॥ अन्यथा मां समासाद्य जीवंती यास्यसे कथम् ॥ १८१ ॥ तच्च वः कौतुकं पूर्वं दृष्टं सत्यं यतो मया ॥ तस्मादनेन सत्येन विमुक्तासि मयाधुना ॥ १८२ ॥ सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः ॥ सत्ये प्रतिष्ठितं ज्ञानं सर्वं सत्ये प्रतिष्ठितम् ॥ १८३ ॥ सत्येन देवास्तिष्ठंति सत्येन पितरस्तथा ॥ सत्येन ऋषयः सिद्धाः सर्वं सत्ये प्रतिष्ठिताः ॥ १८४ ॥ धन्या गावः क्षितिर्धन्या धन्या त्वमपि सुव्रते ॥ धन्यः स राजा यस्य त्वं वससे सत्यवादिनी ॥ १८५ ॥ धन्यं तत्सकलं राष्ट्रं प्राणिवृक्षजलान्वितम् ॥ चचार बहुला यत्र दृष्टा पापप्रणाशिनी ॥ १८६ ॥ ते धन्यास्ते कृतार्थास्ते तैरेव सुकृतं कृतम् ॥ तैराप्तो जन्मनः सारो ये पिबंति गवां पयः ॥ १८७ ॥ भीष्म उवाच ॥ एवमुक्त्वा ततो व्याघ्रः प्रत्ययादि-

स्मयान्वितः ॥ स्वयमेव परामृश्य पुनर्वचनमब्रवीत् ॥ १८८ ॥
व्याघ्र उवाच ॥ प्रत्यादेशोऽयमस्माकं सत्यं दैवेन निर्मितः ॥ अन्यथा व्याघ्रनिर्मुक्ता पुनरायाति सांप्रतम् ॥ १८९ ॥ सत्यं दृष्ट्वा गवां सर्वे रोचते मे न जीवितम् ॥ तत्करिष्याम्यहं कर्म येन मुच्येय कल्मषात् ॥१९०॥ मया जीवसहस्राणि भक्षितानि हतानि च ॥ कांस्तु लोकान् गमिष्यामि कृत्वा तत्कर्म दारुणम् ॥ १९१ ॥ गमिष्ये पुण्यतीर्थानि करिष्ये पापशोधनम् ॥ पतिष्ये शृंगमारुह्य प्रविश्ये वा हुताशनम् ॥ १९२ ॥ बहुले यन्मया कार्यं तपः पापविशुद्धये ॥ तदादिशस्व संक्षेपान्न कालो विस्तरस्य मे ॥ १९३॥ बहुलोवाच ॥ तपः कृते प्रशंसंति त्रेतायां ज्ञानमुत्तमम् ॥ द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ १९४ ॥ सर्वेषामेव दानानामिदमेवैकमुत्तमम् ॥ अभयं सर्वभूतानां मनोवाक्कायकर्मभिः ॥ १९५ ॥ चराणामचराणां च यो भयं नो प्रयच्छति ॥ स सर्वभयनिर्मुक्तः परं ब्रह्माधिगच्छति ॥ १९६ ॥ नास्त्यहिंसापरं पुण्यं नास्त्यहिंसापरं सुखम् ॥ नास्त्यहिंसापरं ज्ञानं नास्त्यहिंसापरो दमः ॥ १९७ ॥ यथा हस्तिपदे नान्यत्पदं सर्वं विधीयते ॥ सर्वे धर्मा विलीयंते तथा चैव ह्यहिंसया ॥ १९८ ॥ योगवृक्षस्य सा छाया तापत्रयविनाशिनी ॥ धर्मज्ञानप्रसूनस्य स्वर्गमोक्षफलस्य च ॥ १९९ ॥ दुःखत्रयार्कसंतप्ताश्छायां योगतरोः स्थिताः ॥ न तप्यंते पुनर्दुःखैः प्राप्य निर्वाणमुत्तमम् ॥ २०० ॥ इत्येतत्परमं गुह्यं कीर्तितं ते समासतः ॥ ज्ञानमेव त्वया नूनं कर्तव्यं मां च पृच्छसि ॥ व्याघ्रत्वमपि ते मन्ये शापात्प्राप्तमहं त्वयि ॥ २०१ ॥ व्याघ्र उवाच ॥ अहं देवैः पुरा सर्वैर्व्याघ्ररूपेण निर्मितः ॥ ततः प्राणिवधैर्घोरैरशेषं मम विस्मृतम् ॥ २०२ ॥ त्वत्संपर्कोपदेशाभ्यां संजातं स्मरणं मम ॥ मुक्तशापस्तु संजातः प्रसादात्तव सुव्रते ॥ २०३ ॥ बहुले तव तुष्टोऽस्मि

पुत्रेण सहिता भव ॥ त्वं चाप्यनेन सत्येन गमिष्यासि परां गतिम् ॥ २०४ ॥ भीष्म उवाच ॥ ततस्तु योगमाश्रित्य व्याघ्रस्तद्गतमानसः ॥ प्राणायामैः स्वकं देहं परित्यज्य दिवं गतः ॥ २०५ ॥ सर्वपापविशुद्धात्मा योगैश्वर्य्यसमन्वितः ॥ विमानेनातिमहता सेवितश्चाप्सरोगणैः ॥२०६॥ विमानेन गतं दृष्ट्वा विस्मयं परमं गता ॥ बहुला हृष्टपुष्टांगी गोकुलं पुनरागता ॥२०७ ॥ आगत्य च यथावृत्तं व्याघ्रसंवादमुत्तमम् ॥ सखीभ्यः कथयामास पुत्रस्य च विशेषतः ॥ २०८॥ बहुला पुत्रसंयुक्ता सुप्रीता सुनिराकुला ॥ गोधनैर्वृषभैर्वन्यैर्गोपगोपीजनैरपि ॥ २०९ ॥ विचचाराटवीं सर्वामशेषभयवर्जिता ॥ समालोक्य च गोपालान्दृष्ट्वा गोपीः सवत्सकाः ॥ २१०॥ यथेष्टं चेष्टमभवद्गोकुलं तत्प्रभावतः॥ ततश्चाल्पेन कालेन सत्यवाक्यप्रभावतः ॥२११॥ सराष्ट्रभृत्यं राजानं सांतःपुरपरिच्छदम् ॥ गोपान्गोपाश्रितान्सर्वान्बहुलातिष्ठिपद्दिवम् ॥ २१२ ॥ महाविमानैः श्रीमद्भिः सखीभिः सर्वतो वृताः ॥ प्राप्य स्वर्गं क्रमादूर्द्धमशेषैः सहिता पुनः ॥ २१३ ॥ स्वर्गादुपरि लोकानां गत्वा गोलोकमाश्रिता ॥ २१४ ॥ तत्र सा भोगसंपूर्णैरसंख्यातैः सुरोत्तमैः॥ क्रीडते सहिता सर्वैर्यावदाभूतसंप्लवम्॥२१५॥ इत्येतत्सत्यवाक्यस्य माहात्म्यं समुदाहृतम् ॥ यः पठेच्छृणुयाद्वापि स्वर्गलोकं स गच्छति ॥ २१६ ॥ बहुलाव्याघ्रसंवादं यः पठेत्सततं नरः ॥ शृणुयादेकचित्तस्तु स प्राप्नोति परां गतिम् ॥ २१७ ॥

इति श्रीमदितिहाससमुच्चये बहुलोपाख्यानं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ३० ।

वैशंपायन उवाच ॥ शरतल्पगतं भीष्मं सर्वशास्त्रभृतां वरम् ॥ देवव्रतं महाप्राज्ञं पप्रच्छेदं युधिष्ठिरः ॥ १ ॥ युधिष्ठिर उवाच ॥ पितामह महाप्राज्ञ सर्वेषां हि हिते रतः ॥ विद्वत्संरक्षणो यत्स्यात्फलं

तद्वद सुव्रत ॥ २ ॥ भीष्म उवाच ॥ श्रूयतां तस्य माहात्म्यं विद्वत्संरक्षणस्य यत् ॥ कन्यका सुव्रता नाम वरांगी वरवर्णिनी ॥ ३ ॥ सुशीला च सुवेषा च सौंदर्येणेव निर्मिता ॥ पिता तस्या महाप्राज्ञः सर्वशास्त्रार्थतत्त्ववित् ॥४॥ तत्पत्नी च महासाध्वी कालधर्मेण योजिता ॥ ततस्तेनैव दुःखेन गृहस्थाश्रमनिःस्पृहः ॥ ५ ॥ तपोवनं जगामाथ विप्रेंद्रः शंसितव्रतः ॥ ऋषिभिः सेवितं पुण्यं शाकमूलफलाशनैः ॥६॥ पुण्यैः सरोभिरमलैर्वृक्षखंडैश्च मंडितम् ॥ स तत्र मुनिभिः सार्द्धं ध्यानयोगपरायणैः ॥ ७ ॥ निवासं कृतवान्राजन्सुव्रतायाश्च रक्षणम् ॥ तेन बाला सुसंबद्धा सानुक्रोशेन धीमता ॥ ८ ॥ बाल्ये वयसि वर्त्तंती मातृहीना विधेर्वशात् ॥ पुत्रकैः कृतकै रेमे क्रीडाभांडैश्च शोभनैः ॥ ९ ॥ अन्यैश्च विविधैर्हृद्यैः पिता समनुलालयन् ॥ पालयामास धर्मात्मा पुत्रिकां हृदयोपमाम् ॥ १० ॥ तामेव सततं साध्वीं मन्यमानो महातपाः ॥ शिशुत्वात्सुव्रतायाश्च पिता दुहितृवत्सलः ॥ पाणिं न ग्राहयामास मातृहीनेति चिंतयन् ॥ ११ ॥ विरक्तो हि महाप्राज्ञः संसारात्सर्वधर्मवित् ॥ पुत्रिकापेक्षया सम्यक् संन्यासं नाकरोद्वशी ॥ १२ ॥ इति संरक्षयन्बालां मातृहीनां तपस्विनीम् ॥ संयुक्तः कालधर्मेण पिता स्वर्लोकमास्थितः ॥ १३ ॥ ततः सा कन्यका दीना पितृहीना सुदुःखिता ॥ विललापातुरा बाला पतिता शोकसागरे ॥ १४॥ सुव्रतोवाच ॥ अहो मम पिता बालां विवशां दुःखजीविताम् ॥ संत्यज्य गतवानद्य दयालुः सर्वनिस्पृहः ॥ १५ ॥ अहोऽसौ सर्वभूतेऽपि ममात्यंतहिते रतः ॥ मामेवाद्य परित्यज्य परलोकमितो गतः ॥ १६ ॥ साहं परमदुःखार्त्ता पितृशोकेन विह्वला ॥ शरीरं धारयाम्येतत्कृपणं व्यर्थजीवितम् ॥ १७ ॥ ब्रह्मज्ञोऽपि महाप्राज्ञः परमार्थबहिर्मुखः ॥ मामेव पालयामास मातृहीनेति संस्मरन् ॥ १८ ॥ अद्य तातस्य का चाहमन्ये च स्थावरादयः ॥ तथापि मयि निर्बंधः कारु-

ण्यामिह केवलम् ॥ १९॥ येन संवर्द्धिता बाल्ये येनास्मि परिरक्षिता ॥ तेन पित्रा वियुक्ताहं न जीविष्ये कथंचन ॥ २० ॥ नद्यां वा निपतिष्यामि समिद्धे वा हुताशने ॥ सर्वथापि पतिष्यामि पतिहीना निराश्रया ॥ २१ ॥ भीष्म उवाच ॥ इति शोकातुरां बालां विलपंतीं निराश्रयाम् ॥ बोध्यमानां महाभागैः सभार्यैर्मुनिसत्तमैः ॥ २२ ॥ रुदतीभिश्च कन्याभिर्वयस्याभिः समंततः ॥ आलिंग्यालिंग्य बहुशः पीड्यमानां सुदुःखिताम् ॥ २३ ॥ आगत्य करुणाविष्टो यमः परहिते रतः ॥ स्थविरो ब्राह्मणो भूत्वा प्रोवाचेदं वचस्तदा ॥ २४ ॥ ब्राह्मण उवाच ॥ अलं बाले विशालाक्षि रोदनेनातिविह्वला ॥ न भूयः प्राप्यते तातस्तस्मान्नार्हसि शोचितुम् ॥ २५॥ अनित्यं यौवनं रूपं मानुष्यं द्रव्यसंचयः ॥ आरोग्यं प्रियसंवासस्तस्मान्नार्हसि शोचितुम् ॥ २६ ॥ त्वया चैव कृतं कर्म पूर्वजन्मनि शोभने ॥ येन पित्रा वियोगस्ते जातोऽयं वनगोचरे ॥ २७ ॥ वृद्धः कारुणिकोऽतीव तव तातो महायशाः ॥ न त्वत्पाणिग्रहं दृष्ट्वा तथा जामातरं शुभे ॥ २८ ॥ संत्यज्य सर्वकर्माणि समलोष्टाश्मकांचनः ॥ यास्यामि परमेवाहं परादित्यकरोन्मतिम् ॥२९॥ ततः कालवशाद्धीमांस्तपस्वी करुणो मृदुः ॥ स्वर्गलोकं गतो बाले त्वामेव परिचिंतयन् ॥ ३० ॥ त्वां विहाय गतः क्वापि पश्य बाले विधेर्बलम् ॥ इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ॥ एवमीहासमायुक्तं कृतांतः कुरुते वशम् ॥३१॥ तस्मात्त्वं दुःखमुत्सृज्य श्रोतुमर्हसि सुव्रते ॥ पितृभ्यां विप्रयोगोऽसौ येनासौ कर्मणा तव ॥ ३२ ॥ पुरा त्वं सुंदरी नाम वेश्या परमसुंदरी ॥ नृत्यगेयादिनिपुणा वेणुवीणाविशारदा ॥ ३३ ॥ स्वर्गादिव च्युता साक्षाद्रूपलावण्यपेशला ॥ आद्या च पुण्यनारीणां भूषणच्छादनादिभिः ॥ ३४ ॥ त्वां दृष्ट्वा रूपसंपन्नां सुवेषां सुविभूषिताम् ॥ ब्राह्मणो गुणसंपन्नः सहसा काममोहितः ॥ ३५ ॥ तं तु दृष्ट्वा तथाभूतं ब्राह्मणं कामपीडितम् ॥ आढ्यं च

रूपसंपन्नमिति मत्वा विमृश्य च ॥ ३६ ॥ आकार्य स्वगृहं शीघ्रं वशीकृत्य सखीजनैः ॥ समाश्वास्य च तेनैव रमितासि द्विजन्मना ॥ ३७ ॥ एवं स्वगृहमानीय तेनैव रममाणया ॥ हतार्थसंपच्चासीद्वै तथा धर्मादयो गुणाः ॥ ३८ ॥ सोऽपि पापमतिर्मूढो ब्राह्मणो विषयात्मकः ॥ हतः शूद्रेण केनापि कामिना तव वेश्मनि ॥ ३९ ॥ विहाय भार्यां कल्याणीमप्रौढां नववार्षिकीम् ॥ प्रयातो नरकं घोरं शूद्रसंसर्गदोषतः ॥ ४० ॥ ततस्तस्य पिता विद्वान्माता च वरवंशजा ॥ क्रुद्धौ पुत्रवियोगेन भार्या च पतिदेवता ॥ ४१ ॥ दुःखाभिभूतमनसस्त्वामत्यंत सुदुर्मतिम् ॥ आहुः क्रुद्धेन मनसा जानंतस्तव वंचनम् ॥ ४२ ॥ मातोवाच ॥ औषधानि प्रयुज्यैव वशीकृत्य ममात्मजम् ॥ यथास्माकं वियोगाय वंचितो दुष्टचारिणि ॥ तथा जन्मान्तरे त्वं च मातृहीना भविष्यसि ॥ ४३ ॥ पितोवाच ॥ यस्मान्ममाद्य पुत्रेण वियोगं कृतवत्यसि ॥ तेन जन्मांतरे चंडि पितृहीना भविष्यसि ॥ ४४ ॥ बाल्ये वयसि वर्तंती पितृहीना सुदुःखिता ॥ स्वजनस्यापि दूरस्था सा भवत्वतिगर्हिता ॥ ४५ ॥ भार्योवाच ॥ कन्या भवतु चंडी सा विवाहेन बहिष्कृता ॥ अनाथा शोकसंतप्ता सा भवत्वतिमोहिता ॥४६॥ ब्राह्मण उवाच ॥ एवं माता पिता चैव भार्या च पतिदेवता ॥ आहुः परमसंक्रुद्धास्त्वामकार्यप्रवर्तिनीम् ॥ ४७ ॥ तस्मात्पूर्वकृतेनैव कर्मणा वरवर्णिनि ॥ इत्थं दुःखमनुप्राप्ता कन्यका भवती सती ॥४८॥ सुव्रतोवाच ॥ त्वया जन्मांतरे वृत्तं प्रोक्तमन्वयशोभितम् ॥ तस्मात्प्रब्रूहि भगवन्पृच्छंत्या मम निश्चितम् ॥४९॥ इत्थं सुघोरकर्माहं पापाचाररता तथा ॥ कथं वा ब्राह्मणस्याहमुत्पन्ना ब्रह्मवादिनः ॥५०॥ दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ॥ दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥५१॥ एवं वदन्ति धर्मज्ञा ब्राह्मणाः शंसितव्रताः ॥ तस्माद्विजोत्तमादस्मात्कथं जन्माभवन्मम ॥५२॥ ब्राह्मण उवाच ॥ पापाचाररता नित्यं

ब्राह्मणानां कुले शुभे ।। उत्पन्ना तस्य वक्ष्यामि हेतुमद्य शुचिस्मिते ॥५३॥ शृणु तस्य महाप्राज्ञे निमित्तं वदतो मम ॥ येन त्वं ब्राह्मणकुले समुत्पन्ना महात्मनि ॥ ५४ ॥ ब्राह्मणो ज्ञानसंपन्नः सत्यवागनसूयकः ॥ समः सर्वेषु भूतेषु ज्ञाननिर्धूतपातकः ॥ ५५ ॥ ब्राह्मणे ज्ञानसंपन्ने मूर्खे च गवि हस्तिनि ॥ स्थावरेषु च सर्वेषु समदृष्टिर्जितेंद्रियः ॥५६॥ ईश्वरः सर्वभूतेषु वसत्येको निरंजनः ॥ तेन व्याप्तमिदं सर्वं तन्मयत्वेन चिंतयन् ॥ ५७ ॥ ब्रह्मण्यवस्थितो विद्वान्ब्रह्मात्मकमिदं जगत् ॥ येनेदं ब्रह्म विज्ञातं स च ब्रह्मणि संस्थितः ॥ ५८ ॥ प्रियाप्रियेषु नोद्विग्नः स्थिरधीर्न च मूढधीः ॥ बाह्येंद्रियार्थे निःसंगस्तथात्मध्यानतत्परः ॥ संस्पर्शजानां भोगानां दुःखोत्पत्तिं च संस्मरन् ॥ ५९ ॥ अनित्यतां तथैवैषां निश्चलो विगतस्पृहः ॥ नियम्य कामं क्रोधं च तथात्मसुखमेव च ॥ निर्द्वंद्वः सर्वभूतेषु सुखे च परिनिष्ठितः ॥ ६० ॥ भयदर्पविनिर्मुक्तः सर्वसंगविवर्जितः ॥ समीकृत्य तथा प्राणमपानं च यथाविधि ॥ ६१ ॥ चक्षुषी च यथाभागमवस्थाप्य सुनिश्चले ॥ ध्यायन्निष्कल्मषं ब्रह्म सर्वलोकमहेश्वरम् ॥ ६२ ॥ उन्मत्तवेषेणोन्मत्तो विचचार महीमिमाम् ॥ प्राप्तवान्नगरीं रम्यां त्वया जन्मांतराश्रिताम् ॥६३ ॥ स कदाचिन्महाभागस्त्वद्गृहं प्राप्य सुव्रते ॥ प्राकारवेदिकां प्राप्य ह्युवास निरवद्यधीः ॥ ६४ ॥ चीरवासा महाभागः कृशांगो मलिनस्तथा ॥ निर्द्वंद्वो भस्मना छन्नो हुताशन इवापरः ॥६५॥ ततो निशीथे संप्राप्ते पुरीपालनतत्पराः ॥ नराः कवचसन्नद्धाः खड्गशूलगदाधराः ॥ ६६ ॥ सन्नद्धा बहवः शूरा भेरीरवभयंकराः ॥ संप्राप्तास्त्वद्गृहाभ्यासं विचरंतो यदृच्छया ॥ ६७ ॥ ते पापकर्मनिरता ब्राह्मणं वीतकल्मषम् ॥ चौर एवायमित्युक्त्वा शयानं पर्यबोधयन् ॥ ६८ ॥ ऊचुश्च तमहो त्वेकः कस्त्वमत्यद्भुताकृतिः ॥ कुतो वा कस्य चेत्येवं कौतूहलसमन्विताः ॥ ६९ ॥ ततस्तेन च यत्प्रोक्तं

ब्राह्मणेन महात्मना ॥ चक्रिरे नैव विश्वासं मिथ्याज्ञानवशं गताः ॥ ७० ॥ बबंधुश्च महाप्राज्ञं रज्ज्वा पापविनिश्चयाः ॥ नैव कष्टं न चावादीद्ब्राह्मणः पूर्वकर्मवित् ॥ तेन ब्रह्मविदा प्रोक्तं सत्यधर्मा-त्मकं वचः ॥ ७१ ॥ श्रुत्वा त्वं तस्य माहात्म्यमवगम्य विधेर्वशात् ॥ भृत्यवर्गं पुरस्कृत्य गृहान्निःसृत्य सत्वरम् ॥ ७२ ॥ तिष्ठ तिष्ठेति तानुक्त्वा दीपमादाय वेश्मतः॥ तमालोक्य महात्मानमेवमुक्तवती तदा ॥ ७३ ॥ मुच्यतामेव धर्मात्मा नरोऽयं न च पापधीः ॥ अनेन यत्कृतं चौर्य्यं तन्मयैव कृतं भवेत् ॥ ७४ ॥ गच्छतेति च तानुक्त्वा त्वया पाशेन मोचितः ॥ प्रविश्याभ्यंतरे सद्यस्तेन ब्रह्मविदा सह ॥ ७५ ॥ शयनं निर्मलं योग्यं समर्प्य च हितात्मनः ॥ धूपदीपादिभिश्चैव समा-राध्य तपोनिधिम् ॥ ७६ ॥ नमस्कृत्य यथान्यायं विषयेष्वतिनि-स्पृहम् ॥ अभिधाय पुनश्चैव त्वया धर्मार्थकं वचः ॥ ७७ ॥ प्रार्थितं मनसा सम्यक्प्रस्तावसदृशं शुभे ॥ आकांक्षा यदि ते ब्रह्मन्भो-जनाच्छादनादिषु ॥ ७८ ॥ अनुगृह्णीष्व निःशंकं कृशोऽसि मलिनाम्बरः ॥ स्थीयतामत्र धर्मज्ञ दिनानि कतिचित्प्रभो ॥ शरीरं प्रकृतौ स्थाप्य पुनर्गच्छ यथासुखम् ॥ ७९ ॥ इत्येवमुक्तो धर्मात्मा त्वया विमलमानसः ॥ उवाच वचनं प्राप्तं विप्रः सर्वार्थनिस्पृहः ॥८०॥ विप्र उवाच ॥ न च क्षुधा नैव पिपासया वृतो यदृच्छया केवलमागतोऽ-स्म्यहम् ॥ अतः परं नैव ममास्ति कांक्षितं निराकुलं सुंदरि मंतु-मर्हसि ॥ ८१ ॥ भजस्व शय्यां बत भर्तृसंसृतां न मेऽस्ति कृत्यं करुणार्द्रमानसे ॥ त्वया तु मद्रक्षणभक्तियुक्तया वदाद्य मे किं न कृतं शुचिस्मिते ॥ ८२ ॥ त्वया समः कोऽत्र परात्मपालने स्वनुष्ठितं सुंदरि कथ्यतामिह ॥ परोपकाराय भवंति साधवो गुणान्विताश्चंदनपादपा इव ॥८३॥ यथा स्वदेहे परिनिष्ठितं मनस्तथा परेषामपि रक्षणोन्मु-खम् ॥ इदं समालोक्य परोऽपि शोभने सुरक्षणीयो हितमिच्छता-

त्मनः ॥८४॥ स एव धन्यः करुणार्द्रमानसः परोपकारार्थमिहार्थसंपदः ॥ बिभर्त्ति यः सर्वजनाश्रयो जनं फलान्वितः सत्पथपादपोपमः ॥ ८५ ॥ गृहं समृद्धं धनधान्यशोभनं पुराकृतैः कर्मभिरर्जितं यदि ॥ अनादृताऽतिथ्यमहानिधिः पुमान्कथं वृथा जीवति लोकगर्हितः ॥ ८६ ॥ कृशोऽपि धन्यः सुजनः स बुद्धिमान्परोपकाराय भवत्यहो जनः ॥ महापथावस्थितपादपः शुभः कृशोऽपि कष्टाय फलान्वितो नु किम् ॥ ८७ ॥ क्रमेण धर्माऽश्रितचित्तवृत्तयस्तरंति संसारसमुद्रमश्रमम् ॥ भवंति तेषां सुहृदः सदा नराश्चरंति ये धर्ममनेकसंपदा ॥ ८८ ॥ धनानि धर्मेऽभिनिविष्टचेतसां प्रयांति वृद्धिं शुभवृत्तिनो नराः ॥ भोगेन नश्यंते न संपदो नृणां शुभं यदा नश्यति नश्यति ध्रुवम् ॥ ८९ ॥ प्रवृद्धतृष्णापरिहीणमानसा धनानि नेच्छंत्युपभोगमात्मना ॥ हरंति तेषामपरे विचक्षणा स्थलेन मत्स्यानिव तीरमाश्रितान् ॥ ९० ॥ स्वधर्मकर्मेतरसंश्रया नरा व्रजंति सर्वे यमसादनं प्रति ॥ तथापि धर्मे विमुखाश्चरंत्यहो विचेतनानां किमिहास्ति दुष्करम् ॥ ९१ ॥ धनं शरीरं स्वजनं स्वजीवितं प्रियाणि मित्राणि शरीरसंपदः ॥ चिरायुषः[1] पश्यति मूढचेतनो न तत्समः कश्चिदिहास्ति दुर्मतिः ॥ ९२ ॥ अनित्यमेतत्सकलं चराचरं विनष्टमुत्पन्नमितीह पश्यताम् ॥ वदामि किं ते बहुना धनानि ये त्यजंति धर्माय त एव पंडिताः ॥ ९३ ॥ ददाति धर्मः समुपार्जितः फलं फलार्थिभिः सुंदरि कथ्यते मया ॥ विरुद्धमप्यात्महितं स्मरन्ति हि गतस्पृहाः संयमिनोऽपि मानवाः ॥ ९४ ॥ भवंति पक्षेषु हि पक्षपातिन इदं प्रकृत्यैव कलेवरं शुभे ॥ मलीमसं दुःखशतावहं तथा शरीरसंस्कारपरा वरानने ॥ ९५ ॥ वृथा नरः क्लिश्यति मूढचेतनः शरीरिणां पुण्यनिविष्टचेतसाम् ॥ महात्मनामप्यवदातकर्मणां भवंति दुःखानि तथापि दुर्मतिः[3] ॥ ९६ ॥ शरीरबंधं न

---

१ चिरस्थायिनीरित्यर्थः इदं शरीरसम्पद इत्यस्य विशेषणम् । २ श्लोकद्वयमेकान्वयि । ३ दुर्मतिस्तथापि शरीरबन्धं न विहातुमिच्छतीत्युत्तरेणान्वयः ।

विहातुमिच्छति यदस्य बीजं यदिहास्य भाजनम् ॥ यदस्य पारं भवमृत्युनाकुलं समीक्षमाणः स जहाति निस्पृहः ॥ ९७ ॥ शरीरमत्यंतसुखेतरास्पदं कियत्प्रमाणेन शरीरधारणम् ॥ भवत्यलं तत्परिमाणभुग्भवेच्छरीरमप्यात्मसुबोधसाधनम् ॥ ९८ ॥ विचिंत्य तत्वार्थंसुबोधवच्चरेन्महात्मनस्तत्त्वनिविष्टचेतसः ॥ प्रयांति नाशं विपरीतबुद्धयः सतां समालोक्य विशुद्धिसाधनम् ॥ ९९ ॥ किमस्ति नास्तीति विचिंतयिष्यतो विपर्ययज्ञानमरीचिमालिनः ॥ कथं तमस्तिष्ठति सन्निधौ रवेः सुलोचने दुर्बलतां मनोगतम् ॥ १०० ॥ विहाय तत्त्वं मनसा विचिंत्यतां विपर्ययज्ञानविनाशनं यदा ॥ करोति तत्त्वे विनिविष्टचेतसा तदा नरः सुंदरि साधुसत्पथे ॥१०१॥ प्रवर्त्तते योऽयमलोकनिंदितः प्रवर्तमानस्य यथोक्तकर्मणा ॥ प्रवृत्तदोषाः प्रलयं व्रजंति हि प्रवृत्तिदोषेण विना कृतः पुमान् ॥ १०२ ॥ कथं वियोगं प्रति दुर्मना भवेद्विमुक्तदोषग्रहणस्य चात्मनः ॥ कथं हि दुःखानि भवंति देहिनो निविष्टदुःखस्य महात्मनस्तथा ॥ १०३ ॥ सुखावहा मुक्तिरदूरतः स्थिता भवेद्यदा निर्जितषट्सपत्नः ॥ अवेक्ष्य सम्यग् विनिविष्टचेतसा करोति योगक्रमशुद्धसाधनम् ॥ १०४ ॥ प्रयाति सिद्धिं पुरुषो न संशयः क्वचित्प्रमाणां क्वचिदप्रमाणाम् ॥ क्वचिद्विकल्पः क्वचिदप्रयोजनं भवत्यतत्त्वास्पदचित्तवर्त्मनः ॥ १०५ ॥ यदा तदाकृष्य प्रवृत्तिपंचकं स्वरूपमाविश्य सुनिश्चला स्थितिः ॥ तदात्मनिष्ठां भजतीति सर्वदा विचार्य पश्चाद्धृदयेन धार्य्यताम् ॥ १०६ ॥ विविक्तसेवी विषयेषु निःस्पृहः परेण वाभ्यासबलेन योगवित् ॥ क्रमेण चित्तं विदधाति शोभने स्वरूपसंस्थं परमार्थनिष्ठितम् ॥ १०७ ॥ यदा तु चित्तं प्रतिरुद्धमात्मनि स्वरूपसंस्थानमुपैति तत्वतः ॥ तदामृतत्वं भजते स योगविद्विनष्टबाह्येंद्रि-

---

१ अज्ञानमिति शेषः । २ इदं पदत्रयमुत्तरान्वायि ।

यवृत्तिगोचरः ॥ इतीदमुक्ता परमार्थवेदिना विमृश्य तं चोक्तवतीति सुव्रता ॥ १०८ ॥ सुव्रतोवाच ॥ भवानहो भृत्यजने च मद्विधे करोति कारुण्यमशेषभाजनम् ॥ अचिंतितं भृत्यजनस्य दुःसहं भवद्विधास्तत्वनिविष्टबुद्धयः ॥ वदंति नूनं पुरुषार्थसाधनं परार्थसिद्धिप्रवणेन चेतसा ॥ १०९ ॥ कथं त्वहं दुष्कृतकर्मकारिणी मलीमसी दुष्टजनस्य चाश्रया ॥ विनष्टचित्ता परचित्तहारिणी तरामि संसारसमुद्रमश्रमम् ॥ ११० ॥ प्रसीद मे भृत्यजनस्य सर्वदा भवद्विधाः सर्वजने दयालवः ॥ इति ब्रुवाणां पुनरेव मुक्तवांस्तपोनिधिस्तां करुणार्द्रमानसः ॥ १११ ॥ यम उवाच ॥ शृणुष्व भक्तिप्रवणेन चेतसा वदामि ते सुंदरि कांक्षितं त्वया ॥ यदुक्तमग्रे पुरुषार्थसाधनं समासतोऽप्येतदनुग्रहोचितम् ॥ ११२ ॥ गुरुप्रमाणीकृतचित्तवृत्तयस्तदागमेषु प्रणयप्रवृत्तयः ॥ अमानिनो दंभविवर्जिता नरास्तरंति संसारसमुद्रमश्रमम् ॥ ११३ ॥ अहिंसकाः क्षांतिपरायणास्तथा सुखेषु दुःखेषु समानबुद्धयः ॥ ऋजुस्वभावा विषयेषु निस्पृहास्तरंति संसारसमुद्रमश्रमम् ॥ ११४ ॥ स्थिरस्वभावाः शुचयः शुभव्रता गुरुक्रियानित्यविविक्तसेविनः ॥ अलोकवार्ताभिरतास्तथा नरास्तरंति संसारसमुद्रमश्रमम् ॥ ११५ ॥ यथास्य गर्भेऽभिनिवेशपीडनं विनिर्गमे बाल्यमथास्य यौवनम् ॥ पुनश्च वार्द्धक्यविधिं वदंति ये तरंति संसारसमुद्रमश्रमम् ॥ ११६ ॥ अखंडमध्वांतरिता निराकुलास्तथा परे ब्रह्मणि निश्चलं मनः ॥ चिराय कुर्वंति च ये निरीक्षणं तरंति संसारसमुद्रमश्रमम् ॥ ११७ ॥ नमोऽस्तु विश्वेश्वर विश्वयोनये नमश्च लोकत्रयकर्मसाक्षिणे ॥ इति प्रमाणाभिरतास्त्रिविक्रमे तरंति संसारसमुद्रमश्रमम् ॥ ११८ ॥ भजंति ये विष्णुमनन्यचेतसा तथैव तत्कर्मपरायणा जनाः ॥ विनष्टरागादिगुणा विमत्सरास्तरंति संसारसमुद्रमश्रमम् ॥ ११९ ॥ निवृत्तलोभाः परिहीणमत्सरा निवृत्ततृष्णा विषयेषु निःस्पृहाः ॥ क्रमेण धर्मार्जितचित्त-

वृत्तयस्तरंति संसारसमुद्रमश्रमम् ॥ १२० ॥ ब्राह्मण उवाच ॥ इत्थं निवेद्य सत्यात्मा यत्किंचित्तदनुग्रहात् ॥ यथेमं दुःखसंसारं तरंतीति विचिंतयेत् ॥ १२१ ॥ तत्रैव वसतिं कृत्वा तदनुग्रहकाम्यया ॥ उष-स्युषसि चोत्थाय ययौ विद्वान् यथागतम् ॥ १२२ ॥ ततः प्रभृति तन्वंगी संसारेष्वतिनिस्पृहा ॥ सर्वान् भोगान्परित्यज्य गृहं च सपरि-च्छदम् ॥ १२३ ॥ वर्त्तमाना यथोक्तेन वाक्येन विगतस्पृहा ॥ सर्वा-न्कामान्परित्यज्य समलोष्टाश्मकांचना ॥ १२४॥ गृह्णंती च तथात्मानं पापनिष्कृतितत्परा ॥ कृच्छ्रचांद्रायणपरा ततः कालवशं गता ॥१२५॥ तस्मात्तेनैव महता कर्मणा वरवर्णिनि ॥ उपदेशेन चान्यस्य स्वल्पेनापि महात्मनः ॥ १२६ ॥ अनभिज्ञाय तेनोक्तं स्त्रीत्वात्सर्वा-र्थसाधकम् ॥ तथापि तत्प्रभावेण वचसा च महात्मनः ॥ ब्राह्मणानां कुले जाता सुव्रते ब्रह्मवादिनाम् ॥ १२७ ॥ तेषां शापफलं चापि प्राप्तावितथवादिनाम् ॥ अनुग्रहाद्द्विजेंद्राणां कस्मिंश्चित्समये तदा ॥ विमुक्ता कर्मबंधेन परं ब्रह्माभिगच्छसि ॥ १२८ ॥ भीष्म उवाच ॥ एतच्छ्रुत्वा महाभाग सुव्रतात्यंतविस्मिता ॥ उवाच दुःखनिर्मुक्ता ब्राह्मणं ब्राह्मणात्मजा ॥ १२९ ॥ सुव्रतोवाच ॥ भगवन्सर्वधर्मज्ञ ममापि च हिते रतः ॥ कस्त्वमत्यंततेजस्वी जन्मांतरविशारदः ॥ १३० ॥ भूतं भव्यं भविष्यच्च सूक्ष्मं स्थूलं तथापरम् ॥ विप्र कथं व्यवहितं सम्यक्पश्यंति योगिनः ॥ १३१ ॥ इति वेद-विदो ब्रह्मन्वदंति विमलाशयाः ॥ अनुगृह्णीष्व भद्रं ते यद्वो मनसि वर्तते ॥ १३२ ॥ सुव्रतोवाच ॥ भगवन्मम माता च पिता च निरवद्यधीः ॥ अन्ये च बांधवाः सर्वे सुहृदः सर्व एव च ॥ १३३ ॥ प्राप्तास्तव पुरं ये वा निरयादिषु सर्वशः ॥ स्वर्गे तिष्ठंति भगवन्यावदाभूतसं-प्लवम् ॥१३४॥ भीष्म उवाच ॥ तथेति चोक्त्वा कौंतेय यमः सर्वहिते रतः ॥ अर्चितश्च यथान्यायं तत्रैवांतरधात्पुनः ॥१३५॥ सुव्रता च महा-

भागा विशोका सर्वनिःस्पृहा ॥ तपश्चकार तन्वंगी तस्मिन्नेव तपोवने ॥ १३६ ॥ शुश्रूषमाणा ब्रह्मर्षीन्रममाणा सुकर्मसु ॥ अचिरेणैव कालेन सम्यग् ज्ञानमवाप्य वै ॥ १३७ ॥ उपदिष्टेन मार्गेण ब्रह्मविद्भिस्तपोधनैः ॥ अनुग्रहेण विप्रस्य महता ब्रह्मवादिनः ॥१३८॥ वासुदेवे दृढां भक्तिमुद्वहंती दृढव्रता ॥ ततः परमपश्यंती सा सुजाता महामतिः ॥ १३९ ॥ दानेन महता चापि विमुक्ता कर्मबंधनैः ॥ प्राप्ता च तत्पदं विष्णोर्यत्कांक्षंति मुमुक्षवः ॥ १४० ॥ तस्मात्त्वमपि राजेंद्र बुद्धिमास्थाय सात्त्विकीम् ॥ विष्णुं ब्रह्मण्यदेवेशं समभ्यर्च्य च भारत ॥ १४१ ॥ ब्राह्मणान्सर्वधर्मज्ञान् सत्यधर्मपरायणान् ॥ वासुदेवे जगद्धाम्नि भक्त्या परमयान्वितान् ॥ १४२ ॥ क्रोधलोभादिरहितान् परेषां च हिते रतान् ॥ पूजयस्व महाभक्त्या दानमानार्चनादिभिः ॥१४३॥ यस्य विप्राः प्रसीदंति तस्य देवः प्रसीदति ॥ तस्माद्ब्राह्मणशुश्रूषुः परं ब्रह्माधिगच्छति ॥ १४४ ॥ वेश्या पापसमाचारा परद्रव्यापहारिणी ॥ एवं विप्रान्समाराध्य विमुक्ता कर्मबंधनैः ॥ १४५ ॥ परहितनिरतानां धर्मकर्मप्रियाणां भवति शुभगुणानां मुक्तिरित्थं क्रमेण ॥ इति विमलमनोभिः कथ्यते ब्रह्मविद्भिर्नृपवर पररक्षातत्पुरोभूर्विनिद्रः ॥ १४६ ॥ त्रिभुवनगुरुमीशं केशवं केशिशत्रुं सरसिजविमलाक्षं योगिभिर्योगगम्यम् ॥ जनिमरणजदुःखस्यापहंतारमीड्यं क्षितिपगुणगणाढ्यं निर्गुणं संश्रयाद्यम् ॥ १४७ ॥

इति श्रीमदितिहाससमुच्चये सुव्रतासंवादोपाख्यानं नाम त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ३१ ।

वैशंपायन उवाच ॥ देवव्रतं महाप्राज्ञं ध्यानयोगपरायणम् ॥ आश्रयं सर्वभूतानां जितेंद्रियमकल्मषम् ॥ १ ॥ अनाधृष्यं महावीर्यं देवैरपि सवासवैः ॥ सत्यसंधं जितक्रोधं समत्वे परिनिष्ठितम् ॥ २ ॥

नारायणे जगन्नाथे शरण्ये भक्तवत्सले ॥ परां निष्ठामनुप्राप्तं वाङ्मनःकायकर्मभिः ॥ ३ ॥ गुणानामास्पदं शांतं भीष्मं कुरुपितामहम् ॥ प्रणम्य शिरसा भूमौ पप्रच्छेदं युधिष्ठिरः ॥ ४ ॥ युधिष्ठिर उवाच ॥ केचिदाहुः परं धर्मं केचिदाहुः परं धनम् ॥ केचिदाहुः परं कामं केचिन्मोक्षं प्रचक्षते ॥ ५ ॥ सत्यं केचित्प्रशंसंति तपः शौचं तथा परे ॥ शांतिं केचित्प्रशंसंति योगमेव तथा परे ॥ ६ ॥ केचिद्दानं प्रशंसंति केचिदाहुः परं श्रुतम् ॥ सम्यग्ज्ञानं परं केचित्केचिद्वैराग्यमुत्तमम् ॥ ७ ॥ अग्निष्टोमादिकं कर्म तथा केचित्परं विदुः ॥ आत्मज्ञानं प्रशंसंति सांख्यतत्वार्थवेदिनः ॥ ८ ॥ धर्मार्थकाममोक्षाणां चतुर्णामेव केवलम् ॥ बहुधोपायभेदेन बहुधा यः प्रचक्ष्यते ॥ ९ ॥ इत्थं व्यवस्थिते लोके कृत्याकृत्यविधौ नराः ॥ व्यामोहमेव गच्छंति विमुखाः पापकर्मभिः ॥ १० ॥ यदि तेषां परं कृत्यमनुष्ठेयं महात्मभिः ॥ वक्तुमर्हसि धर्मज्ञ मम सर्वार्थसाधकम् ॥ ११ ॥ यद्यहं भवतः सम्यगनुग्राह्यः पितामह ॥ अनुगृह्णीष्व धर्मज्ञ सर्वशास्त्रविशारद ॥ १२ ॥ भीष्म उवाच ॥ श्रूयतामिदमत्यंतं गूढं संसारमोचकम् ॥ श्रोतव्यं च त्वया सम्यग्ज्ञातव्यं च विशांपते ॥ १३ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ पुंडरीकस्य संवादं महर्षेर्नारदस्य च ॥ १४ ॥ ब्राह्मणः श्रुतसंपन्नः पुंडरीको महीपते ॥ आश्रमे प्रथमे तिष्ठन् गुरूणां वशगः सदा ॥ १५ ॥ जितेंद्रियो जितक्रोधः संध्योपासनतत्परः ॥ वेदवेदांगनिपुणः शास्त्रेषु च विचक्षणः ॥ १६ ॥ समिद्भिः साधुयत्नेन सायंप्रातर्हुताशनः ॥ ध्यात्वा यज्ञपतिं विष्णुं सम्यगाराधयन्विभुम् ॥ १७ ॥ तपःस्वाध्यायनिरतः साक्षाद्ब्रह्मसुतो यथा ॥ उदकेंधनपुष्पाद्यैरसकृत्तर्पयन् गुरुम् ॥ १८ ॥ मातापितृभ्यां शुश्रूषुर्भिक्षाहारी जनप्रियः ॥ ब्रह्मविद्यामधीयानः प्राणा-

१ द्वितीयार्थे तृतीया ।

यामपरायणः ॥ १९ ॥ तस्य सर्वात्मभूतस्य संसारेऽत्यंतनिस्पृहा ॥ बुद्धिरासीन्महाराज संसारार्णवतारिणी ॥२०॥ पितरं मातरं चैव भ्रातृनथ पितामहान् ॥ मित्राणि मातुलांश्चैव सखीन्संबंधिबांधवान् ॥ २१॥ धनधान्यसमृद्धिं च गृहं वंशक्रमागतम् ॥ क्षेत्राणि सुमहार्हाणि सर्वसस्योद्भवानि च ॥ २२ ॥ परित्यज्य महोदारस्तृणानीव यथासुखम् ॥ विचचार महीमेतां शाकमूलफलाशनः ॥२३॥ अनित्यं यौवनं रूपमायुष्यं द्रव्यसंचयः ॥ इति चिंतयमानेन त्रैलोक्यं लोष्टवत्स्मृतम् ॥२४॥ पुराणोचितमार्गेण सर्वतीर्थानि पांडव ॥ गमिष्यामि यथाकालमिति निश्चितमानसः ॥ २५ ॥ गंगां च यमुनां चैव गोमतीमथ गंडकीम् ॥ शतद्रुं च पयोष्णीं च शरयूं च सरस्वतीम् ॥ २६ ॥ प्रयागं नर्मदां चैव शोणं चैव महानदम् ॥ प्रभासं विंध्यतीर्थानि हिमवत्प्रभवानि च ॥ २७ ॥ आश्रमेषु च यानि स्युर्नैमिषं पुष्कराणि च ॥ कुरुक्षेत्रे च यानि स्युस्तथा गोवर्द्धनादिषु ॥ २८ ॥ अन्यानि च महातेजास्तीर्थानि सुमहाव्रतः ॥ स चचार महाबाहुर्यथाकामं यथाविधि ॥ २९ ॥ कदाचित्प्राप्तवान्वीरः शालग्रामं तपोनिधिः ॥ पुंडरीको महाभागः पुण्यकर्मवशानुगः ॥ ३० ॥ आसेव्यमानं मुनिभिस्तत्त्वविद्भिस्तपोधनैः ॥ मुनीनामास्पदं रम्यं पुराणेषु च विश्रुतम् ॥ ३१ ॥ भूषितं देवभवनैश्चक्रांकितशिलातलम् ॥ रम्यं विविक्तं विस्तीर्णं सदाचित्तप्रसादकम् ॥ ३२ ॥ केचिच्चक्रांकितास्तत्र प्राणिनः पुण्यदर्शनाः ॥ विचरंति यथाकामं पुण्यतीर्थप्रसंगतः ॥ ३३ ॥ तस्मिन् क्षेत्रे महापुण्ये शालग्रामे महामुनिः ॥ पुंडरीकः प्रसन्नात्मा तीर्थानि समसेवत ॥ ३४ ॥ स्नात्वा देवह्रदे तीर्थे सरस्वत्यां च सुव्रतः ॥ जाह्नव्यां चक्रकुंडे च तथा वै वामनाश्रमे ॥ ३५ ॥ विष्णुकुंडेषु सर्वेषु चक्रनद्याश्रमेषु च ॥ तथान्यान्यपि तीर्थानि तस्मिन्नेव चचार सः ॥ ३६ ॥ ततः क्षेत्रप्रभावेन तीर्थानां चैव तेजसा ॥ मनःप्रसाद-

मगमत्तस्मिन्नेव महात्मनः ॥ ३७॥ सोऽपि तीर्थविशुद्धात्मा ध्यानयोगपरायणः॥ तत्रैव सिद्धिमाकांक्षन्समाराध्य जगत्पतिम् ॥ ३८॥ शास्त्रोक्तेन विधानेन भक्त्या परमया युतः॥ उवास चिरमेकाकी निर्द्वंद्वः स जितेंद्रियः॥ ३९॥ शाकमूलफलाहारः संतुष्टः समदर्शनः॥ यमैश्च नियमैश्चैव तथा चासनबंधनैः॥ ४० ॥ प्राणायामैः सुतीक्ष्णैश्च प्रत्याहारैश्च संततैः॥ धारणाभिस्तथा ध्यानैः समाधिभिरतंद्रितः॥४१॥ योगाभ्यासं तदा तस्मिश्चक्रे विगतकल्मषः॥ वैदिकैस्तांत्रिकैश्चैव तथा पौराणिकैरपि ॥ ४२ ॥ आराध्य ध्येयभावाच्च ततः सिद्धिमवाप्य सः॥ रागद्वेषविनिर्मुक्तः शांतो दांतश्च शीलवान् ॥ ४३॥ आराध्य देवदेवेशं तद्गतेनांतरात्मना॥ पुंडरीको महाभागः पुरुषार्थविशारदः॥ ४४॥ प्रसादं परमाकांक्षन्विष्णोस्तद्गतमानसः॥ तस्य तस्मिन्निवसतः शालिग्रामे महात्मनः॥४५॥ ततः कदाचित्तं देशं नारदः परमार्थवित् ॥ जगाम सुमहातेजाः साक्षादादित्यसन्निभः॥ ४६ ॥ तं द्रष्टुकामो देवर्षिः पुंडरीकं तपोनिधिम् ॥ विष्णुभक्तिपरीतात्मा वैष्णवानां हिते रतः॥ ४७ ॥ स दृष्ट्वा नारदं प्राप्तं सर्वतेजोऽभिभावितम् ॥ महामतिं महाप्राज्ञं सर्वतेजैकभाजनम् ॥ ४८॥ प्रांजलिः प्रयतो भूत्वा प्रहृष्टेनांतरात्मना॥ अर्घ्यं दत्त्वा यथायोग्यं प्रणाममकरोत्तदा ॥ ४९॥ कोऽयमत्यद्भुताकारस्तेजस्वी ह्यव्यवेषधृक्॥ आतोद्यहस्तः सुमुखो जटामंडलभूषणः॥ ५० ॥ विवस्वानथवा वह्निरिंद्रो वरुण एव च॥ इति संचिंतयन् विप्रः पप्रच्छ परमद्युतिः॥ ५१ ॥ को भवानिह संप्राप्तः कुतो वा परमद्युते ॥ त्वद्दर्शनं ह्यपुण्यानां प्रायेण भुवि दुर्लभम् ॥ ५२ ॥ स्वप्नोऽयमिति वेत्त्येवं चिंतायानस्य मेऽनघ ॥ वक्तुमर्हस्यशेषेण यत्पृष्टोऽसि मम प्रभो ॥ ५३॥ नारद उवाच॥ नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् ॥ प्रभावाद्भगवद्भक्तेस्त्वादृशः

१ सन्धिरार्षः।

सततं द्विज ॥ ५४ ॥ स्मृतः संभाषितो वापि पूजितो वा द्विजोत्तमः ॥ पुनाति भगवद्भक्तश्चांडालोऽपि यदृच्छया ॥५५॥ दासोऽहं वासुदेवस्य देवदेवस्य चक्रिणः ॥ शंखचक्रगदापाणेस्त्रैलोक्यस्यैकचक्षुषः ॥ ५६ ॥ इत्युक्तो नारदेनासौ भक्तिपर्य्याकुलात्मना ॥ प्रोवाच मधुरं विप्रस्तस्य दर्शनाविस्मितः ॥ ५७ ॥ पुंडरीक उवाच ॥ धन्योऽहं देहिनामद्य संपूज्योऽहं सुरैरपि ॥ कृतार्थाः पितरो मेऽद्य संप्राप्तं जन्मनः फलम् ॥ ५८ ॥ अनुगृह्णीष्व देवर्षे त्वद्भक्तस्य विशेषतः ॥ किं करिष्याम्यहं विद्वन् भ्राम्यमाणः स्वकर्मभिः ॥ ५९ ॥ कर्त्तव्यमपरं गुह्यमुपदेष्टुं त्वमर्हसि ॥ त्वं गतिः सर्वलोकस्य वैष्णवस्य विशेषतः ॥ ६० ॥ नारद उवाच ॥ अनेकानीह शास्त्राणि कर्माणि च तथा द्विज ॥ धर्ममार्गाश्च बहुधा तथैव प्राणिनां स्मृताः ॥ ६१ ॥ वैलक्षण्यं च जगतस्तस्मादेव द्विजोत्तम ॥ अन्यथा सर्वभूतानां सुखं वा दुःखमेव वा ॥ ६२ ॥ विज्ञातमेकं क्षणिकं निरात्मकमिदं जगत् ॥ इति किंचित्प्रतिज्ञातबाह्यार्थी निरपेक्षया ॥ ६३ ॥ इत्येवं प्राहुरपरे तत्रैव लयमेव च ॥ आत्मनो बहवः प्रोक्ता नित्याः सर्वगतास्तथा ॥ ६४ ॥ अन्यैर्मतिमतां श्रेष्ठैस्तत्त्वालोकनतत्परैः ॥ यावच्छरीरमात्मानं प्रतिपन्नास्तथापरे ॥ ६५ ॥ हस्तिकीटादिदेहेषु महांतमणुमेव च ॥ यथात्र जगतो वृत्तिस्तथा लोकांतरेष्वपि ॥ ६६ ॥ प्रवाहो नित्यमेवैष इति केषांचिदाग्रहः ॥ यद्यत्प्रत्यक्षविषयं तदशून्यं न विद्यते ॥ ६७ ॥ कुतः स्वर्गादयो संतीत्यन्ये निश्चितमानसाः ॥ निरीश्वरमिदं प्राहुः सेश्वरं च जगत्पते ॥ ६८ ॥ अत्यंतभिन्नमतयः परमार्थपराङ्मुखाः ॥ एवमन्ये तु सांचिंत्य यथामति यथाश्रुतम् ॥ वदंति विविधोपायैः सुगुणेषु परस्परम् ॥ ६९ ॥ तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नानाऋषेर्दर्शनमस्ति भिन्नम् ॥ धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पंथाः ॥ ७० ॥ नारद उवाच ॥ शृणुष्वावहितो ब्रह्मन्कथ-

यामि तवानघ ॥ परमार्थमिमं गुह्यं घोरसंसारनाशनम् ॥ ७१ ॥ अनागतमतीतं च विप्रकृष्टमतीव यत् ॥ न गृह्णाति नृणां दृष्टिर्वर्तमानार्थनिष्ठितम् ॥ ७२ ॥ निर्मूलमनुमानाच्च कथं देवादयो नरैः ॥ प्रमाणेनोपलभ्यंते दुष्प्रमाणविमोहितैः ॥ ७३ ॥ आगमो मुनिभिः प्रोक्तो गुरुपूर्वक्रमागतः ॥ प्रमाणमनुविज्ञेयः परमार्थप्रकाशकः ॥ ७४ ॥ तदभ्यासबलाज्ज्ञानं रागद्वेषमलापहम् ॥ उत्पद्यते द्विजश्रेष्ठ सोऽयमागमसंशयः ॥ ७५ ॥ एकमेव सदानंदं निर्गुणं परमव्ययम् ॥ अव्यक्तं व्यक्तरूपेण विश्वं व्याप्य व्यवस्थितम् ॥ ७६॥ व्यापको विष्णुराख्यातोऽभिन्नो भिन्नवदास्थितः ॥ योगिध्येयो ह्यविज्ञेयः परमार्थपराङ्मुखैः ॥ तथापि भेदरूपेण लक्ष्यते दुष्प्रबोधकैः ॥ ७७ ॥ शृणुष्वावहितस्तात कथयामि तवानघ ॥ यत्प्रोक्तं ब्रह्मणा पूर्वं पृच्छतो मम सुव्रत ॥ ७८ ॥ कदाचिद्ब्रह्मलोकस्थं पद्मयोनिं प्रजाप्रतिम् ॥ प्रणिपत्य यथान्यायं पृष्टवानहमव्ययम् ॥ ७९ ॥ किं तज्ज्ञानं परं चास्ति कश्च योगः परस्तथा ॥ एतन्मे पृच्छतः सर्वं ममाचक्ष्व पितामह ॥ ८० ॥ ब्रह्मोवाच ॥ शृणुष्वावहितस्तात ज्ञानयोगमनुत्तमम् ॥ अल्पग्रंथं प्रभूतार्थं न दुःखोत्पादकक्रियम् ॥ ८१ ॥ यः परः प्रकृतेः प्रोक्तः स एषः पंचविंशकः ॥ स एव सर्वभूतात्मा नर इत्यभिधीयते ॥ ८२ ॥ नराज्जातानि भूतानि नाराणीति तथा विदुः ॥ तान्येव चायनं यस्मात्तेन नारायणः स्मृतः ॥ ८३ ॥ नारायणाज्जगत्सर्वं स्वर्गलोकः प्रजायते ॥ तस्मिन्नेव पुनस्तत्र प्रलये संप्रलीयते ॥ ८४ ॥ नारायणः परं ब्रह्म तत्त्वं नारायणः परम् ॥ नारायणः परं ज्योतिरात्मा नारायणः परः ॥ ८५ ॥ परादपि परश्चासौ तस्मान्नास्ति परात्परम् ॥ स एव हि परो देवः स एव परमाक्षरः ॥ ८६॥ स एव परमं व्यक्तं स एव पुरुषः परः ॥ यच्च किंचिज्जगत्यास्मिन्दृश्यते श्रूयतेऽपि वा ॥

अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ ८७ ॥ एवं हि विदितं देवमोंकारं व्याहरन्मुहुः॥ नमो नारायणायेति मंत्रः सर्वार्थसाधकः॥८८॥ किं तस्य तीर्थैः किं दानैः किं तपोभिः किमध्वरैः ॥ देवं ध्यायति यो नित्यं नारायणमनन्यधीः ॥ ८९ ॥ तज्ज्ञानं परमं तात योगश्चैव परस्तथा ॥ परस्परविशुद्धार्थैः किमन्यच्छास्त्रविस्तरैः ॥ ९० ॥ बहवोऽपि यथा मार्गा विशंत्येकं महत्पुरम् ॥ तथा ज्ञानानि सर्वाणि विशंत्येकं तमीश्वरम् ॥ ९१ ॥ स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ॥ जगदादिरनाद्यंतः स्वयंभूर्भवभावनः ॥ ९२ ॥ विष्णुर्विभुरमेयात्मा नित्यः सदसदात्मकः ॥ वासुदेवो जगद्व्यापी पुरुषः कविरव्ययः ॥ ९३ ॥ यस्मात्प्राप्तं स्थितं कृत्स्नं त्रैलोक्यं सचराचरम् ॥ तस्मात्स भगवान्देवो विष्णुरित्यभिधीयते ॥ ९४ ॥ यद्वा सर्वेषु भूतेषु वसत्येष युगक्षये ॥ वसंति तस्मिंस्तान्येव वासुदेवस्तु तत्स्मृतः ॥ ९५ ॥ तमाहुः पुरुषं केचित्केचिदीश्वरमव्ययम् ॥ केचित्कालमनाद्यंतं केचिज्जीवं सनातनम् ॥ ९६ ॥ केचिच्च परमात्मानं केचिच्चैवमनामयम् ॥ केचित् क्षेत्रज्ञमित्याहुः केचित् षड्विंशकं तथा ॥ अंगुष्ठमात्रं केचिच्च केचित्पद्मरजोनिभम् ॥ ९७ ॥ एते चान्ये च मुनिभिः संज्ञाभेदाः प्रकीर्तिताः ॥ शास्त्रेषु कथिता विष्णोर्लोकव्यामोहकारकाः ॥ ९८ ॥ एवं यदि भवेदस्त्रं ज्ञानं निःसंशयं भवेत् ॥ बहुत्वाद्यदि शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् ॥९९॥ आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः ॥ इदमेव परं ज्ञेयं ध्येयो नारायणः सदा ॥ १०० ॥ तस्माद्व्यामोहनान्सर्वांस्त्यक्त्वा शास्त्रार्थनिर्णयान् ॥ अनन्यचेतास्संध्याय नारायणमतंद्रितः ॥ १०१ ॥ सोऽपि सद्गतिमाप्नोति नारायणपरायणः ॥ योऽनिशं भजते भक्त्या भवभीभञ्जनं विभुम् ॥ १०२॥ एवं ज्ञात्वा तु सततं देवदेवं तमव्ययम् ॥ क्षिप्रं यास्यसि तस्यैव सायुज्यं

नात्र संशयः ॥ १०३ ॥ श्रुत्वैवं ब्रह्मणा प्रोक्तं ज्ञानयोगं सुदुर्लभम् ॥ ततोऽहमासं विप्रेंद्र नारायणपरायणः ॥१०४॥ नमो नारायणायेति ये विदुर्ब्रह्म शाश्वतम् ॥ अंतकाले जपन्नेतदेति विष्णोः परं पदम् ॥१०५॥ तस्मान्नारायणस्तात परमात्मा सनातनः ॥ अनन्यमनसा नित्यं ध्यायते तत्त्वचिंतकैः ॥ १०६॥ नारायणो जगद्व्यापी परमात्मा सनातनः ॥ जगतः सृष्टिसंहारपरिपालनतत्परः ॥ १०७ ॥ श्रवणात्स्मरणाच्चैव निदध्यात्सततं शिवम् ॥ आराध्य सर्वथा ब्रह्मन् पुरुषेण हितैषिणा ॥१०८॥ निस्पृहा नित्यसंतुष्टा ज्ञानिनः संयतेंद्रियाः ॥ निर्ममा निरहंकारा रागद्वेषविवर्जिताः ॥ १०९ ॥ अपक्षपातिनः शांताः सर्वसंकल्पवर्जिताः ॥ ध्यानयोगपरा ब्रह्मंस्ते पश्यंति जगद्गुरुम् ॥ ११० ॥ यथा जगदवच्छाद्यं तथा कालांतरादिभिः ॥ भूतं भव्यं भविष्यद्वा विप्रकृष्टं तथैव च ॥ १११ ॥ स्थूलं सूक्ष्मं तथा सर्वं पश्यंति परमार्थतः ॥ तद्गतेनैव मनसा नारायणपरायणाः ॥ ११२ ॥ अन्यथा मंदबुद्धीनां प्रतिभाति दुरात्मनाम् ॥ कुतर्कज्ञानदुष्टानां विभ्रांतेंद्रियवाजिनाम् ॥११३॥ तस्मात्त्वमपि राजेंद्र नारायणपरो भव ॥ तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः ॥११४॥ पितरं मातरं चैव तमेव पुरुषोत्तमम् ॥ परिगृह्णीष्व देवेशं देवदेवं जगत्पतिम् ॥ ११५ ॥ अग्निकार्यं जपं स्नानं तपः स्वाध्यायमेव च ॥ तमेवोद्दिश्य देवेशं कुरु नित्यमतंद्रितः ॥ ११६ ॥ किं तत्र बहुभिर्मंत्रैः किं तत्र बहुभिर्व्रतैः ॥ नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥ ११७ ॥ चीरवासा जटी वापि त्रिदंडी मुंड एव च ॥ भूषितोऽपि द्विजश्रेष्ठ न लिंगं धर्मकारणम् ॥ ११८ ॥ ये मानवा दुरात्मानः पापाचाररताः सदा ॥ तेऽपि यांति परं स्थानं मुदा नारायणाश्रयाः ॥ ११९ ॥ लिप्यंते न च पापेन वैष्णवा वीतकल्मषाः ॥ पुनंति सकलान् लोकान् सहस्रांशुरिवो-

दितः ॥१२०॥ जन्मांतरसहस्रेषु यस्य स्याद्बुद्धिरीदृशी ॥ दासोऽहं वासुदेवस्य सर्वलोकमहात्मनः ॥ १२१ ॥ स याति विष्णुसालोक्यं पुरुषो नात्र संशयः ॥ किं पुनस्तद्गतप्राणाः पुरुषाः संयतेंद्रियाः ॥ १२२ ॥ भीष्म उवाच ॥ इत्युक्त्वा तं स देवर्षिस्तत्रैवांतर्दधे विभुः ॥ परोपकारनिरतस्त्रैलोक्यस्यैकभूषणः ॥ १२३॥ पुंडरीकोऽपि धर्मात्मा नारायणपरायणः ॥ नमोऽस्तु केशवायेति पुनः पुनरुदीरयन् ॥ १२४ ॥ प्रसीदस्व महायोगिन्नितीवोच्चार्य्यं सर्वदा ॥ हृत्पुंडरीके गोविंदं प्रतिजाप्य जनार्दनम् ॥ १२५ ॥ तपःसिद्धिकरे रम्ये शालग्रामतपोवने ॥ उवास चिरमेकाकी पुरुषार्थविचक्षणः ॥ १२६ ॥ स्वप्नेऽपि केशवादन्यं न पश्यति महातपाः ॥ निद्रापि तस्य नैवासीत्पुरुषार्थविरोधिनी ॥१२७॥ तपसा ब्रह्मचर्येण शौचेन च विशेषतः ॥ जन्मजन्मांतरारूढसंस्कारेण च स द्विजः ॥ १२८ ॥ प्रसादाद्देवदेवस्य सर्वलोकैकसाक्षिणः ॥ अवाप परमां प्रीतिं वैष्णवो वीतकल्मषः ॥ १२९ ॥ शंखचक्रगदापाणिं पीतवाससमच्युतम् ॥ श्यामलं पुंडरीकाक्षं सदा पश्यन् हृदि स्थितम् ॥ १३० ॥ सिंहव्याघ्रास्तथान्ये च मृगाः प्राणिविहिंसकाः ॥ विरोधं सहजं हित्वा समेतास्तस्य सन्निधौ ॥१३१॥ विचरंति यथाकामं प्रशांतेंद्रियवृत्तयः ॥ परस्परहितं सम्यग्ध्यायंते पांडुनंदन ॥ १३२ ॥ यथा प्रसन्नान्यभांसि सरसां सरितामपि ॥ दिशः प्रसेदुर्गगनं विमलग्रहतारकम् ॥ १३३ ॥ मरुतश्च सुखस्पर्शा वृक्षा पुष्पफलान्विताः ॥ अनुकूलं ययुः सर्वे पदार्थास्तस्य धीमतः ॥ १३४ ॥ प्रसन्नो देवदेवेशो विष्णुः सुहृदवत्सलः ॥ ततः कदाचिद्भगवान्पुंडरीकस्य धीमतः ॥ १३५ ॥ प्रादुरासीज्जगन्नाथः पुंडरीकायतेक्षणः ॥ शंखचक्रगदापाणिः पीतवासाश्चतुर्भुजः ॥ १३६ ॥

---

१ अदन्तत्वमार्षम् ।

पुंडरीकविशालाक्ष उद्यच्चंद्रनिभाननः ॥ किरीटी कुंडली हारी केयूरी कटिसूत्रवान् ॥१३७॥ श्रीवत्सवक्षाः श्रीवासः कौस्तुभेन विभूषितः ॥ वनमालापरीतांगः स्फुरन्मकरकुंडलः ॥ १३८ ॥ स्फुरता ब्रह्मसूत्रेण मुक्तागणविभूषिणा ॥ प्रोद्भासमानैरन्यैश्च भूषणैरचितोज्ज्वलैः ॥ १३९ ॥ आरुह्य गरुडं श्रीमानंजनाचलसन्निभः ॥ मेरुशृंगसमारूढकालमेघसमद्युतिः ॥ १४० ॥ राजतेनातपत्रेण मुक्तादामविलंबिना ॥ विराजमानो देवेशश्चामरव्यजनादिभिः ॥ १४१ ॥ देवैः सेंद्रैस्तथा सिद्धैर्गंधर्वमुनिकिन्नरैः ॥ वैश्वानरसमूहैश्च भक्तैर्भागवतैरपि ॥ सेव्यमानोऽप्सरोभिश्च पुण्यैश्च परमर्षिभिः ॥ १४२ ॥ तं दृष्ट्वा देवदेवेशं पुंडरीकः कृतांजलिः ॥ पपात सहसा भूमौ साध्वसावनतस्तदा ॥ १४३ ॥ पिबन्निव हृषीकेशं नयनाभ्यां समाकुलः ॥ आलिंग्यालिंग्य बाहुभ्यां लिहन्निव च जिह्वया ॥ १४४ ॥ वदन्निव वचः किंचिज्जिघ्रन्निव च केवलम् ॥ जगाम महतीं प्रीतिं पुंडरीकस्तदानघ ॥१४५॥ पपात भूमौ सानंदस्तुष्टाव च जनार्दनम् ॥ प्रांजलिः प्रयतो भूत्वा प्रहृष्टेनांतरात्मना ॥ १४६॥ पुंडरीक उवाच ॥ नमोऽस्तु विष्णवे नित्यं सर्वलोकैकचक्षुषे ॥ निरंजनाय नित्याय निर्गुणाय गुणात्मने ॥ १४७ ॥ त्वामाहुर्जगदाधारमनाधीरमतींद्रियम् ॥ जात्यादिभिरसंस्पृष्टं चिन्मात्रं परमव्ययम् ॥ १४८ ॥ त्वमोंकारो जगद्वंद्यस्त्वं वषट्कारसंज्ञितः ॥ त्वमीशः सर्वलोकानां तथैव च निरीश्वरः ॥ १४९ ॥ नमः परार्तिनाशाय गोविंदाय नमो नमः ॥ अनुग्रहाय भक्तानामाकारत्रयधारिणे ॥ १५० ॥ त्वयि सर्वमिदं प्राहुस्त्वन्मयं चैव केवलम् ॥ त्वमस्मिस्त्वदभिन्नं च त्वदधीनं जगत्सदा ॥ १५१॥ नमो नमस्ते भगवन्नलिनायतलोचन ॥ समस्तवेदवेदांतविस्तृतायात्मभूतये ॥१५२॥ त्वमेव मम लोकेश शरणं शरणात्मकः ॥ प्रसीद हृदयावास शंखचक्रगदाधर ॥ १५३ ॥ नमः समस्तभू-

तानामादिनाथाय भूभृते ॥ अनेकरूपरूपाय विष्णवे प्रभविष्णवे ॥ १५४ ॥ वाचामगोचरश्चैव महिमास्ति तवाच्युत ॥ सत्वादिभि-रसंस्पृष्टः कथं ज्ञेयोऽसि तत्त्वतः ॥ १५५ ॥ तथापि भेदरूपेण भक्ता-नामनुकंपया ॥ ब्रह्मादिरूपैर्बहुभिर्दृश्यसे पुरुषोत्तम ॥ १५६ ॥ भीष्म उवाच ॥ इति दिव्यैर्वचोभिस्तमस्तौषीन्मधुसूदनम् ॥ तमेवालो-कयन्धीरः किंचित्प्रार्थितलक्षणः ॥ १५७ ॥ ततस्तमाह भगवान्प-द्मनाभस्त्रिविक्रमः ॥ पुंडरीकं महाभागं तदा गंभीरया गिरा ॥ १५८॥ श्रीभगवानुवाच ॥ प्रीतोऽस्मि वत्स भद्रं ते पुंडरीक महामते ॥ वरं वृणीष्व दास्यामि यत्ते मनसि वर्तते ॥ १५९ ॥ भीष्म उवाच ॥ एतच्छ्रुत्वा तु वचनं देवदेवेन भाषितम् ॥ इदं विज्ञापयामास पुंडरीको महामतिः ॥ १६० ॥ पुंडरीक उवाच ॥ क्वाहमत्यंतदुर्बुद्धिः क्व भवंता हितैषिणः ॥ यद्धितं देवदेवेश तदाज्ञापय माधव ॥ १६१ ॥ एव-मुक्तस्तु भगवान्सुप्रीतः पुनरब्रवीत् ॥ पुंडरीकं महाभागं कृतांज-लिमुपस्थितम् ॥१६२॥ आगतं कुशलं तेऽस्तु सखेव त्वं च सुव्रत ॥ मद्रूपधारी नित्यात्मा मम पार्श्वे सदा वस ॥ १६३ ॥ भीष्म उवाच ॥ एवमुक्तवति प्रीत्या श्रीधरे भक्तवत्सले ॥ देव-दुंदुभयो नेदुः पुष्पवृष्टिः पपात च ॥ १६४ ॥ देवाः सेंद्रा-स्तथा सिद्धाः साधुसाध्वित्यथाब्रुवन् ॥ यक्षाश्च सिद्धगंधर्वाः किन्नराश्च विशेषतः ॥ १६५ ॥ तथैव समुपादाय वासुदेवो जगत्पतिः ॥ जगाम गरुडारूढः सर्वदेवनमस्कृतः ॥ १६६ ॥ तस्मात्त्वमपि राजेंद्र विष्णु-भक्तिसमन्वितः ॥ तच्चित्तस्तद्गतप्राणस्तद्भक्तानां हिते रतः ॥ १६७ ॥ अर्चयित्वा यथायोग्यं भजस्व पुरुषोत्तमम् ॥ शृणुष्व तत्कथाः पुण्याः सर्वपापप्रणाशिनीः ॥१६८॥ येनोपायेन राजेंद्र विष्णुः सर्वसुरेश्वरः ॥ प्रीतो भवति विश्वात्मा तत्कुरुष्व सविस्तरम् ॥ १६९ ॥ अश्वमेध-

शतैरिष्ट्वा वाजपेयशतैरपि ॥ न प्राप्नुवंति तां प्रीतिं नारायणपरा हि या ॥ १७० ॥ अजरममरमेकं ध्येयमाद्यंतशून्यं सगुणनिलयसाध्यं स्थूलमत्यंतसूक्ष्मम् ॥ अमृतमनुपमेयं योगिविज्ञानगम्यं त्रिभुवनगुरुमीशं त्वां प्रपन्नोऽस्मि विष्णो ॥ १७१॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ १७२ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायामितिहाससमुच्चये पुण्डरीकोपाख्यानं नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

इतीतिहाससमुच्चयः

समाप्तः ।



पुस्तक मिलनेका ठिकाना–

गंगाविष्णु श्रीकृष्णदास.
" लक्ष्मीवेंकटेश्वर " स्टीम् प्रेस.
कल्याण–मुम्बई.

खेमराज श्रीकृष्णदास.
" श्रीवेंकटेश्वर " स्टीम् प्रेस.
खेतवाडी–बम्बई.